ओ३म् ।

सरस्वती श्रुतिमहती महीयताम् ।



सरस्वती–सम्मेलनस्य

तृतीयं

# वार्षिकमितिवृत्तम् ।



साहित्यपरिषन्मन्त्रिणा सम्पादितम् ।

सं० १९६७ वि०

# विषय-सूचिः



## सूचना ।

श्रीमन्तो महाभागाः ! अस्य तृतीयवार्षिकवृत्तस्य प्रकाशनेऽनिवार्य्यकारणवशान्मुद्रणशैथिल्याच्च, यो विलम्बः समजायत स नूनम्भवद्भिः क्षन्तव्यः संशोधनप्रमादाऽवशिष्टानि स्खलितानि चावश्यं भवन्तः क्षमयन्त—

इत्याशास्ते
इन्द्रः
साहित्यपरिषन्मन्त्री ।

# सरस्वती सम्मेलन–

## तृतीयाधिवेशनस्य

# संक्षिप्तं विवरणम् ।

अस्मिन् १९६६ संवत्सरे सरस्वतीसम्मेलनस्य वार्षिकमधिवेशनञ्चैत्रमासेऽभूत । निमन्त्रणानुरोधात्स्वकृपावशंवदतया च समागतैरनेकै र्विद्वद्भिः सरस्वतीसम्मेलनशाला मण्डिताऽऽसीत् ।

### प्रथमदिवसाधिवेशनम् ।

प्रथमदिवसे चैत्रमासस्यैकादशप्रविष्टायां, विद्वत्सु गुरुकुलव्याख्यानभवने सङ्गतेषु, समारम्भे श्री पं० रामचन्द्रः ( कांगड़ी गुरुकुलाऽध्यापकः ) वाद्यद्विगुणीक्रियमाणमधुरस्वरो मङ्गलाचारात्मिकाङ्गीतिकामेकामगायत् ।[1]

तदनन्तरं श्री० स्वामिवर हरिप्रसादः सभ्येष्वेकेन प्रस्तुतोऽनुमोदितश्चापरेण तद्दिनाधिवेशनाय सभापत्यासनममण्डयत् । वेदानाम्महत्वम्प्रदर्शयन्वेदविषयकनिबन्धश्रवणाय सभ्यानुद्यतान्विधाय, श्री० श्रीपाद दामोदरशातवलेकरं स्वलिखितवेदविषयकनिबन्धश्रावणाय प्रैरयत् ।

---

१ सा च विवरणादनन्तरं मुद्रिता । पृ० १

ततः श्रीयुतशातवलेकरमहोदयः 'वेदस्य विषयप्रतिपादन-शैली' विषयकं निबन्धमश्रावयत्। यस्मिन्हि स योरुपदेशीयाना-मस्मद्देशीयानां सायणादीनाञ्च वेदार्थप्रणालीं सदूषणाम्प्रतिपाद्य वेदार्थकरणस्य समीचीनम्पन्थानम्प्रादर्शयत।

तस्मिन्निबन्धं समापितवति अनेके वक्तारः समालोचनामकुर्वन्। श्री० पं० अखिलानन्दशर्मा, पं० सुबोधानन्दः, पं० प्रेमचन्द्रः, ब्र० ब्रह्मदत्तः, ब्र० जयचन्द्रः, ब्र० इन्द्रः केचिदन्ये च सज्जनाः निबन्धं समालोचयन्। तत्र पूर्वन्तावत्सायणकृतं 'अलौकिकार्थप्रति-पादको वेदः' इति वेदलक्षणं न सम्यक्, वेदकृतेः कणादवाक्याद्-बुद्धिपूर्वकत्वेन बुद्धेश्च प्राकृताया अप्राकृतब्रह्मज्ञानासम्भवात् इति शङ्कामेकेनोत्थापितां, कणादस्य 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति सूत्राद्वेदस्य धर्मप्रतिपादकत्वाद् धर्मे चेश्वरज्ञानस्याऽऽवश्यकत्वाद्वेदस्येश्वर-कथनपरत्वमस्ति, कणादसम्मतमित्यन्योऽपानुदत्। अपरश्च निबन्ध-कर्त्रा वेदार्थकथनावसरे घनजटावल्ल्यादिवर्णनन्नविहितमित्यशङ्कत।

एवमादिषु शङ्कासूद्भूतासु निबन्धकर्ता संक्षेपेणोत्तरमदात। स पुनरपि 'असूर्य्या नाम ते लोका' इत्यादि यजुर्वेदस्थमन्त्रकृतं 'असी-रियादेशवर्णनगर्भं योरपीयविद्वत्कृतमर्थं प्रदर्श्य तत्कृतवेदार्थान् प्रणालीविरुद्धानकथयत्।

तदनु सभापतिः स्वां वक्तृतां व्यतार्षीत्। तस्या अयमभिप्रायः "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इत्यस्य सूत्रस्य, वेदे न बुद्धिविरुद्धोऽर्थोऽस्ती-त्येतावदेवाभिप्रेतं न किमप्यन्यत्। अतः ईश्वरस्य बुद्धिगम्यताऽस्तीति

---

१ निबन्धो विवरणोत्तरम्मुद्रितोऽस्ति।

न वेत्येष विषयोऽत्राप्रासङ्गिक एव। वेदाश्च सायणो क्त्यनुसारन्न केवल-मलौकिकार्थप्रतिपादका एव, अपि तु लौकिकालौकिकोभयविधार्थ-प्रतिपादकाः, तेषाम्मनुष्यकर्ममात्रनियामकत्वात् ।

वेदसूक्तानाम्मूर्द्धसु या ऋषिनामलेखपरिपाटी साऽतिनवीना, कात्यायनादिमुनिभिः परिचालिता, तेभ्यः पूर्वं क्वाऽपि तस्याः स्मरणाऽभावात्। ये त्वाहुः, यस्य वेदमन्त्रस्यार्थो येनर्षिणा प्रकाशित स्तस्यर्षेर्नाम-तन्मन्त्रमूर्द्धनि लिख्यते, तन्न, वेदप्रकाशकाग्न्यादिमनस्स्वेव तदर्थस्यापीश्वरेण प्रकाशितत्वात्। इतरथा तस्मात्तस्मान्मन्त्रार्थाविष्कर्तुः प्राक्तत्प्रतिपादितधर्मविषये जनानामज्ञत्वप्रसङ्गात् । मन्त्रेषु देवतादिकल्पनापि कात्यायनादिकल्पितैव ।

वेदमध्यगाः शब्दा यौगिकवृत्त्या व्याख्येयाः, योगरूढिवृत्त्या वेति प्रश्ने मन्मते यौगिकार्थस्वीकार एव प्रशस्यतमः। पर सर्वत्र तेनैव न कार्य्यं सिध्यति, अतः योगरूढार्थोऽपि क्वचित्स्वीकार्य्यः ।

वेदेषु पुनरुक्तिरस्ति न वा? अत्र केचिदाहुर्वेदे पुनः पुनरधीतानामपि मन्त्राणां स्वरभेदादस्ति तावदर्थभेद इति तन्न समञ्जसम्—स्वराभेदे सत्येवाऽनेकेषांमन्त्राणां पुनरावृत्तेरुपलम्भात् । वस्तुतस्तु पुनरावृत्तिः लेखकशोधकभ्रममूलैव, पुनरावृत्तिदोषरहिता एव शोधिता वेदाः प्रचारणीया इति मे मतम् ।

यत्तूक्तन्निबन्धकृता, वदषु शब्दलालित्यन्नास्ति तन्न समीचीनम्, लालित्यं हि स्वल्पेष्वदूषितेषु शब्देषु बह्वर्थप्रकाशनन्नाम, तच्च वेदेष्वस्तीत्यस्ति वेदे शब्दलालित्यमपि ।

वेदानामर्थः कथं विधेय इति विषये मम मतमेतद्, यन्निरुक्तकृदन्ये वा नवीनाः सायणादयो व्याख्याकृतो न प्रमाणभावनाभ्युपगन्तव्याः, परं सर्वैर्मनुष्यैः स्वयमेव वेदानामवगाहनं विधेयम् । ततश्च स्वयमेव वेदार्थः स्फुटीभविष्यतीति ।

सभापतिव्याख्यानसमाप्त्या सह प्रथममधिवेशनं समाप्तिमगमत् ।

## द्वितीयमधिवेशनम् ।

तस्मिन्नेवाहनि सायङ्काले द्विवादनात्पुनरधिवेशनमभूत् । समधिकैर्विद्वद्भिः परिषत्स्थानममण्ड्यत । श्री० स्वामि हरिप्रसाद एव साभापत्यमभजत् ।

आदौ श्री० पं० अखिलानन्दशर्मा निजनिर्मितवेदस्तुतिशतकमश्रावयत्[1] ।

तदनु सभापतिनोदनया श्री० पण्डितवरार्य्यमुनिः स्वकृतमुक्तिविषयकन्निबन्धमश्रावयत्[2] ।

निबन्धं श्रावितवति निबन्धकर्तरि समालोचकमहोदयैस्ससमालोच्यत । पण्डिताखिलानन्द प्रेमदत्त हरिनामासिंहादिभिः सज्जनैः श्री०अखण्डानन्दादिभिः स्वामिभिः, वर्णिना ब्रह्मदत्तेन च स निबन्धः समालोच्यत ।

---

१ एतच्छतकं विवरणान्ते मुद्रितम् । पृ० ३

२ एतदपि विवरणान्ते मुद्रितम् । पृ० ५८

तत्रादावेकः समालोचकः, मुक्तेर्ध्वंसाऽभावरूपत्वाद् ध्वंसस्य चाविनाश्यत्वात् नित्यैव मुक्तिरित्यशङ्कत । अन्यः, समवायस्य नित्यसम्बन्धत्वाद् दुःखस्य चात्मनि समवायसम्बन्धेन विद्यमानत्वात्कथमात्मनोदुःखनाश इत्युदटङ्कत । इतरः पुनः, आनन्द आत्मनः स्वरूपमेव, अज्ञानापाये तस्य स्वभावत एव प्रकाशो भवति नातः कर्मफलमतोनाऽनित्येत्यनुयुयुजे ।

एकश्चान्यः समालोचको निबन्धकृत्कृतं 'ते मृत्युलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इतिमुक्तेर्निवर्तनपरमर्थं, मुच्धातोर्बन्धविरुद्धत्वाद्बन्धनार्थताऽनुचितेति वदन्, निषिषेध ।

एवं समालोचकमहोदयेषु समालोच्य विश्रान्तेषु निबन्धकृदुत्तराणि ददौ ।

तत्कृतवक्तृताया अयमाशयः—'दुःखध्वंसाऽभावो मुक्ति' रिति यदाशङ्कितं तन्न समीचीनमनागतदुःखस्य प्रागभाव एव मुक्तिरिति स्वीकारात् । यदप्युक्तमात्मनि दुःखसमवायात्समवायस्य च नित्यसम्बन्धत्वात्कथंमुक्तिरिति, तदपि दुःखस्यात्मस्वाभाविकगुणत्वाभावान्न समञ्जसम् । नाऽयमात्मनो नित्यो गुणः, अपि त्वनित्यः शब्दवत् । यत्तु 'ते मृत्युलोकेष्वि'तिमन्त्रे परिमुच्यन्तीत्यत्र बन्धम्प्राप्नुवन्तीत्यर्थे विपदमुत्थापयन्ति तैरिदञ्चिन्त्यं यद्यथा निषेधनिषेधोऽस्त्यात्मको भवत्येवमेव मुक्तमोचो बन्ध एव भवतीति ।

समालोचितासु निबन्धकृता समालोचनासु सभापतिरातिदीर्घव्याख्यानं व्यतार्षीत् । तस्यायमाशयः—

'का नाम मुक्तिः'? दुःखेभ्यो विमुच्यात्मनो ब्रह्मानन्दोपभोगोमुक्तिरिति । 'तमेव विदित्वातिमृत्युमेति' 'ब्रह्मविदाप्नोति परम्'

इत्यादिभिरार्षवैदिकप्रमाणैः ब्रह्मज्ञानान्मुक्तिः, 'अत्र ब्रह्म समश्नुते' 'रसं ह्येवायं लब्ध्वानन्दीभवती'त्यादि प्रमाणैश्च तत्र तस्य ब्रह्मानन्दोपभोगो लभ्यते । यस्तु निबन्धकृता मुक्तावात्मना लौकिकानन्दभोग उक्तः, स पौराणिकादिमतवत्परिहेय एव । 'एवमप्युपन्यासात्' 'पूर्वभावादाविरोधः' इत्यादि बादरायणसूत्रेभ्योऽपि न लौकिकानन्दभोगविधानमस्ति ।

यत्तु महर्षिणा दयानन्देन मुक्तेरनित्यताविधानं कृतमित्याहुः । तत्रोच्यते, तस्यैव ऋग्वेदादिभाष्यभूमिकायां मुक्तेर्नित्यताविधानमप्यस्ति, तत्र किं वक्ष्यते । तस्य विरोधस्य केनापि यत्नेन परिहारो-विधेय एव । परन्त मुक्तेरनित्यता स्वीकार्य्यैव ।

आत्मा तावदात्मना ब्रह्म जानाति, न मनसा । तथा चोपनिषत्-'आत्मना आत्मानं संविवेश' 'यन्मनसा न मनुते येनाहुर्मनोमतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' आत्मना परमात्मज्ञानोत्तरमात्मनो मुक्तिर्भवति, ब्रह्मानन्दोपभोगश्च तस्य लभ्यते ।

अधुना मुक्तिर्नित्याऽनित्या वेति विचार्य्यते । ये तावदनित्याम्मुक्तिमाहुः, ते कर्म्मफलरूपामेव मुक्तिं स्वीकुर्वन्ति । तन्न सम्भवति । तथा च मुण्डकोपनिषद् :—

'भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्वसंशयाः ।

**क्षीयन्ते चाऽस्य कर्माणि** तस्मिन् दृष्टे परावरे' ।

एवं वेदान्तेऽपि 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद् व्यपदेशात्' । अन्यत्राऽपि मुण्डकोपनिषदि 'तथाविद्वान्नामरूपा-

द्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' अतः कर्मनाशे मुक्तिः, न पुनः कर्म्मणा मुक्तिरिति।

अपि तु ज्ञानान्मुक्तिः। तथा च साङ्ख्यसूत्रम् 'ज्ञानान्मुक्तिः'।

कर्म्माणि तु ज्ञानाग्निना मुक्तेः प्रागेव भस्मसाद् भवन्ति। तथा च गीतायां 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन!' भस्मसाद् भूतेषु कर्मसु केन हेतुना मुक्तेरावृत्तिः सम्भवति ?

परम्महर्षिदयानन्दोऽस्माकमाचार्य्यः, तस्य कथनमपि साधनीयम्। तदर्थमुच्यते, न सर्वे जीवा मुक्तेरावर्तन्ते, ईश्वराज्ञावशगाः केचिदेव त्वावर्तन्ते। तथा च वेदान्तेऽपि 'यावदधिकारमवस्थितिराधिकारिकाणाम्। प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्योक्तेः'।

वेदेऽपि 'उताऽमृतत्वस्येशानो यदन्नेनाधिरोहति'।

यथा लोकेऽपि सुचिरं स्वामिनमुपसेव्य पेन्शनं लब्धवतां स्वामिकार्य्ये समागते पुनरपि सेवा कर्तव्यतामापद्यते, एवमेव मुक्तानामपीश्वराज्ञावशादावृत्तिर्युज्यते।

मुक्तेर्नावर्तते जीव इत्यत्र उपनिषदपि प्रमाणम्—

'ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे'।

॥ इति ॥

---

## तृतीयमधिवेशनम् ।

तृतीयमधिवेशनमग्रिमदिने प्रातःकालेऽभूत् । भूयांसः पण्डिताः सभाममण्डयन् । पण्डितवर श्री० तुलसीरामशर्म्माणः सभापतित्वमध्यतिष्ठन् ।

सभापते राज्ञया ब्र० हरिश्चन्द्रः 'संस्कृतसाहित्यविषयकं स्वकृतन्निबन्ध मपठत[1] ।

निबन्धपाठोत्तरमनेके समालोचकास्तं समालोचयन् । श्री० पण्डिताखिलानन्दसुबोधानन्दार्य्यमुनिप्रभृतयो विद्वांसः, इन्द्र जयचन्द्र ब्रह्मदत्त बुद्धदेवादयो ब्रह्मचारिणः, श्रीयुत घनश्यामसिंहगुप्त गोवर्धनादयोऽध्यापकाश्च समालोचनामकुर्वन् । श्री० अध्यापक रामदेवोऽप्यार्य्यभाषया निवन्धमालोचयत् ।

तत्र समालोचिता इमे मुख्यविषयाः ( १ ) समासानां या निन्दा निबन्धकर्त्रा कृता सा न समुचिता, समासार्थानां सर्वत्र दुरवबोधताविरहात् क्वचित्पुनश्चमत्काराधायकत्वाच्च । अर्थाविष्करणे लाघवहेतुताऽपि समासे प्रतीयते । ( २ ) यदप्युक्तन्निबन्धकृता भारतस्य भाविनी भाषा संस्कृतगीर्नास्तीति तदपि न सम्यक्, वर्त्तमानप्रवृत्तिर्भाविनि काले संस्कृतस्यैव भारते प्रचारो भविष्यतीति द्योतयति । संस्कृतभाषा न केवलं भारतस्यैव अपि तु संसारस्यापि भाषा भविष्यतीति ( ३ ) संस्कृतनवीनकविकृतिषु भाववैलक्षण्यन्नास्ति, नातस्ते गुणवन्तः ।

---

१ अयमपि निबन्धो विवरणान्ते दृश्यताम् । पृ० ८१

समालोचनायामवसितायां निबन्धकृत्तत्समालोचनं व्यधात् । सोऽवोचद्यन्न समासानां सर्वेषामेव मयाऽपि निन्दा क्रियते, परन्दुर्बोधानामेव क्रियते । तच्च मद्विपक्षिभिरप्यभिमतमेव । यदप्युच्यते संस्कृतम्भारतस्य भाविनी भाषास्तीति, तदप्यतिमनोहरं सदपि न युक्तिसिद्धम्प्रतिभाति । न ममैतावन्ति प्रबलानि लक्षणानि संस्कृतभाषापुनरभ्युदयस्य प्रतीयन्ते, यत्तस्याः प्रचारस्याशा स्यात् । यत्तु नवीनकाव्येषु नास्ति भाववैलक्षण्यमित्युक्तं तदप्ययुक्तम् । केवलङ्कालिदासग्रन्थेष्वेव शतशोविलक्षणभावानां विद्यमानत्वादिति ।

समालोचितसमालोचने निवृत्तवति सभापतिः श्रीयुत पं०तुलसीरामशर्मा व्याख्यानमदात् तच्चेत्थम् ।

'निबन्धकर्त्रा स्वनिबन्धस्य लेखने सम्यग्योग्यता प्रदर्शिता अतिदीर्घसमासानां विपरीतभूता या तस्य मतिः साऽपि सम्यगेव, दीर्घसमासानां भाषारसापकर्षकत्वात् । भाषायाः प्रयोजनं श्रोतृभ्योऽर्थज्ञापनमेव, तदेव यदि समासकाठिन्यात्तिरोहितं तर्हि भाषयैव किम् ? ।

यदप्यनुप्रासानान्दूषणत्वन्तदपि काठिन्ये सत्यनुप्रासस्य सम्यगेव, तेनापि भाषायां दुरवगमतादोषव्यासङ्गात् ।

आर्षग्रन्थेषु हि प्रायोऽसमस्तानां लघुसमासानां सुगमानां शब्दानाम्प्रयोगो भवति । तत्र किलार्थस्यैव बाहुल्यं भवति, न पुनः शब्दकाठिन्यम् । तेषामेव पन्थाः प्रशस्यतमः । आर्षग्रन्थेषु हि भाववैलक्षण्यस्य प्राधान्यम्भवति नवीनग्रन्थेषु पुनः शब्दवैलक्षण्यस्यैव प्राधान्यम्भवति ।

किञ्चैषान्नवीनकाव्यानामनेकाग्राह्यपङ्कदूषितानां ब्रह्मचारिभिरग्रह एव वरः प्रतीयते । न पुनरेषाङ्गुणदोषविवेचना ।

निबन्धे शब्दस्य नित्यताऽनित्यताविषयेऽपि विवादोऽभूत् । पतञ्जलि मुनिना किल शब्दस्य नित्यत्वमुक्तम् । तस्य ध्वनिनित्यतायान्न कथमप्यभिप्रायः परं भाषासमयस्य व्याकरणात्पूर्वमपि सत्त्वमस्तीत्येतावान् तस्याभिप्रायः । न व्याकरणं शब्दान्निर्मिमीते, अपि तु सतः शब्दान्नियमयतीति, व्याकरणापेक्षया शब्दानान्नित्यतैव ।

भारतस्य भाविनी भाषा संस्कृतभाषैव भविष्यतीत्यत्र ममाप्यस्ति सन्देहः । यद्यपि देशे बहुत्र संस्कृतशब्दप्रयोगस्य बाहुल्यमस्ति, तथापि प्रकारभेदस्यापि नास्त्यल्पता । भेदा अपि बहवः सन्ति । तथा च संस्कृतक्रियायां लिङ्गभेदो न भवति, एवमेव बङ्गभाषायामपि क्रियायां लिङ्गभेदो न दृश्यते । परमार्यभाषायां दृश्यते । भारते प्राकृतिका एव भेदा ईदृशाः सन्ति यैर्बलेन भाषाया विभेदः क्रियते, तथा गिरिणा नदेन वा प्रायः प्रान्तानि विभज्यन्ते न चायम्भाषाविभेदो नवीनः, अपि त्वतिप्राचीनो यदा किलर्षयोऽभूवन् । परं भाषायामधिकविभेदस्य, संस्कृतभाषाप्रचारक्षतेश्च मुख्यङ्कारणम्भारतीयानां कूपमण्डूकताश्रय एव ।

वास्तविकविद्वत्वं प्राप्तुमेकविद्यायामभ्यास एव नोचितः, एकविद्यां सम्यगभ्यस्याऽन्यत्रापि प्रवेशो मनुष्यत्वलब्धये आवश्यकः न चैतदस्मद्देशेऽस्तीति । अतीव मे प्रमोदो यदत्र गुरुकुले साहित्यपरिषदेतत्कर्तुमिच्छति । तथा च प्रत्यक्षमस्य फलमयन्निबन्ध एव ।

यद्यपि निबन्धश्रावणेन मया बुद्धं कदाचिदिदम्महतः परिश्रमस्य फलमिति कारणाद्गौरवान्वितमस्ति परन्तु निबन्धुरान्तिमोत्तरन्निशम्य मे आशङ्का वृथात्वमेवाप्तवती । चिरविचारेण महतायासेन च निबन्धलेखो न कठिनङ्कार्यम् । परमुत्थापितानामाशङ्कानां द्रुतमुत्तरदानन्तदपि प्रवाहिणि संस्कृते, वस्तुतः प्रशस्यमेतत्कर्म्म ।

येऽपि विद्याया एतास्मिन्मार्गे समुन्नतिङ्कामयन्ते तैरवश्यम्परिषदः साहाय्यं विधेयम् । साहित्यपरिषद् यद्यनवरतं स्वं कार्यं करिष्यति तर्हि तयार्य्यसमाजे पण्डितानाम्महानभावः पूरयिष्यते । अतः सर्वथा साहाय्यास्पदमेव साहित्यपरिषदिति ।

**इन्द्रः**
**साहित्यपरिषन्मन्त्री**

॥ ओ३म् ॥

सरस्वती श्रुतिमहती महीयताम् ।

# सरस्वतीसम्मेलनस्य

## तृतीयवार्षिकाधिवेशने, पठिता निबन्धाः ।

## गीतिका ।

[ साहित्यपरिषन्मन्त्रिणा कृता ]

तपःप्रभावजेन यं विदन्ति तेजसा बुधाः ।
नमामि तम्महेवरम्महस्विनन्तपोमयम् ॥ १ ॥
गिरां यदीयवैभवादवाप्यते सदर्थता ।
समस्तसत्यकोविदं स्मरामि चारुचिन्मयम् ॥ २ ॥
कृपावशेन यो जगत्यजीजनद्दयानिधिम् ।
हिमांशुशीतदर्शनम्भजामि तन्दयामयम् ॥ ३ ॥
करोति यः कृपासुधाविनष्टविक्लमञ्जगत् ।
समस्तशोकशान्तये जपामि तन्निरामयम् ॥ ४ ॥
तदीयसत्कृपावशान्निरीक्ष्य सङ्गतं विदाम् ।
न कस्य चित्तचन्द्रिका विकासमेति सञ्चयम् ॥ ५ ॥
अये विशेषविद्यया निरस्तसर्वकल्मषाः ।
भवाम सद्विचारणापरायणाः क्षणं वयम् ॥ ६ ॥
सरस्वतीसमागमं समुन्नतं चिकीर्षताम् ।
वदाम वो वयं बुधा शुभागतन्निरामयम् ॥ ७ ॥
व्यतीतहायनेऽभवद्द्वितीय सङ्गमो हि नः ।
तृतीयसङ्गमोदये करोतु लोककृज्जयम् ॥ ८ ॥

# वेदवर्णनशतकम् ।

## कविरत्नश्रीमदखिलानन्दशर्म्मप्रणीतम् ।

दूरीकृतस्वशरणागतसर्वखेदं-
निर्मूलिताखिलनवीनमतप्रभेदम् ॥
निःश्वासमारुतसमुत्थसमस्तवेदं-
विश्वेश्वरं प्रति समेतु नमो ममेदम् ॥ १ ॥

नानाविवादविषयप्रथने कृपार्णा-
या संगता स्वरमयानि नवाक्षराणि ॥
संहृत्य यामनुनमंति बुधाः स्वपाणी-
सा मे समेतु हृदयं मधुराद्य वाणी ॥ २ ॥

येषामनुत्तमगुणानि लसन्मतानि-
सौभाग्यतो जनिमितस्य भुवं गतानि ॥
पादाम्बुजानि सकलैरनिशं नतानि-
तेषांममोपरि भवंतु सतां[1] ततानि ॥ ३ ॥

वल्मीकुतः समयमेत्य जनिं गतेन-
नित्यं महेश्वरपदोपगतौ रतेन ॥

---

१ सतां बुधानाम् ।

येन प्रदर्शितमदः[1]करणं यतेन-
वंदे तमद्य सुकविं[2] शिरसा नतेन ॥ ४ ॥

यस्यांगतामुपगतः प्रमदादकारः-
प्रागंतरे स निभृतस्थलिमानुकारः ॥
पश्चाद्ययौ मुनिनुतं यमहो मकारः-
श्रेयस्तनोतु सकलत्र स[3] निर्विकारः ॥ ५ ॥

लोकांतरं विधिवशात्पुरतः प्रयातं-
लोकोदरे निहितविस्तृतकीर्तिजालम् ॥
लोकोपकारकरणव्रतबंधशातं-
हा तं नमामि शिरसा महितं स्वतातम् ॥६॥

येषामनुत्तमकृपावशतःकृतानि-
काव्यानि मंजुलपदानि पर[4]ःशतानि ॥
लोकोत्तराणि चरणांबुरुहाणि तानि-
तेषां[5] भवंतु हृदये मम संगतानि ॥ ७ ॥

देवी गिरामपि गता नहि यस्य पारं
नालंभि किंचिदपि यस्य शिवेन[6] सारम् ॥
प्रातः स्तुवंति यदहो मनुजाः सतारं-
नव्यं महः किमपि तत्प्रणतोस्मि हारम्[7] ॥८॥

---

१ काव्यकरणम् । २ वाल्मीकिम् । ३ ओंकारवाच्यः ।
४ मयेतिशेषः । ५ श्रीमद्युगलकिशोर–विष्णुदत्तशर्म्मणाम् ।
६ केनचिद्योगिना । ७ हरतीतिहरस्तस्येदंहारम् ।

( युग्मम् )

शांत्यापि यस्य पुरतो विधिनैव[1] शांत-
नानानिबंध[2]वशतो बहुधाप्यतान्तम् ॥
निर्देशतो बुधगणस्य सदैव दान्तं-
यं मामवाप जननी नवकाव्यकान्तम् ॥ ९ ॥

सोऽहं भवच्चरणरेणुरणुः समस्ते-
विख्यातमेकविषयं कृपया स्वहस्ते ॥
धृत्वा सतां समुदये सकलप्रशस्तं-
भो भावुकाः प्रकथयाम्यधुना नमस्ते ॥१०॥

ज्ञानार्थकाद्विदं[4] इति प्रथितैकधातो-
र्यद्वेदशब्दजननं विबुधैः प्रदिष्टम् ॥
मन्ये तदस्ति नियतं निखिलावबोध-
संबंधसंगतिसमर्थनिरुक्तिशक्त्या ॥ ११ ॥

देवस्य सर्वजगतामधिपस्य तस्य-
यज्ज्ञानमाकृतिविकारविहीनमेकम् ॥
विज्ञास्तदेव निगदंति विचारदक्षाः
सत्यात्मकं किमपि वेदपदेन वाच्यम् ॥१२॥

भर्गो वरेण्यममलं सवितुः समस्ते-
यद्धियते मुनिशतानुगतं प्रसिद्धम्

---

१ वेदानुकूलेनेतिशेषः । २ निबन्धाग्रंथा-नितरां वन्धाश्च ।
३ इतिकथनात्तरामिति शेषः । ४ विदज्ञाने इति धातोः ।

निःश्वासमारुतवदस्ति निसर्गसिद्धम्-
तद्वेदवाच्यमिति सर्वमतेन सिद्धम् ॥ १३ ॥

शक्तो भुवस्तलमितेषु जनेषु नैव-
संदृश्यते निगदितुं महिमानमस्य ॥
वेदस्य कोपि विधिवादकथानिसर्गा-
दालंबनं परमवेक्ष्य शिवाय मागात् ॥ १४ ॥

शिक्षावशेन यमधीत्य जनोत्र लोके-
ब्रह्मा भवत्यमरतामथ संप्रयाति ॥
मूढोपि भूत[1]समुदायसमुद्गतोपि
वेदः स कस्य वचसां पदवीमुपेयात्? ॥१५॥

कारुण्यतो निखिलमत्र समेति यस्य-
तारुण्यभावविषयं प्रगतो मनुष्यः ॥
सर्वात्मना सकलविश्वनिदानभूतः-
कस्यास्तु सोद्य भगवान्कथनेषु वेदः? ॥१६॥

भूतं भवत्सकलभूतमयं भविष्य-
यज्ज्ञागतं मतिमुपैति सतां यथावत् ॥
वेदात्प्रसिध्यति समस्तमनस्तयातज्-
ज्ञानाः! किमत्र वचनीयमहो वदंतु ॥ १७ ॥

यो जीवनं नरशरीरमितस्य जंतो-
र्जीवातवे च सकलस्य गतः प्रतिष्ठाम् ॥

---

१ पंचमहाभूतजन्यः ।

धर्मः स शा¹तधनधान्यसुतादिसस्यो
वेदादुदेति दमदानदयाशरीरः ॥ १९ ॥

यन्निंदको जगति नास्तिकता मुपैति-
भक्तस्तथास्तिकपदेन मनुष्यवर्यैः ॥
प्रख्याप्यते गतवतां स बुधोत्तमानां-
वेदः शिवाय यतते वितते स्वमार्गे ॥ १६ ॥

यज्ञादिकर्मविनियोगमुखेन वेगा-
दभ्यर्णमागतजनेषु सुखेन लोके ॥
यो भुक्तिमर्पयति मुक्तिमनंतसौख्या-
मंते च यामनुगतो न विरौति जंतुः ॥ २० ॥

यस्यागमेन रहितोऽन्यकृतश्रमोपि-
विप्रः प्रकृष्टगुणवानपि कर्मयोगैः ॥
वेगेन शूद्रपदवीमनुयाति सर्वा-
नावेष्ट्य वंशसहकारिमनुष्यवर्यान् ॥ २१ ॥

निष्कारणो द्विजवरेण लसद्गुणेन-
धर्मोयमित्थमवगम्य षडंगसंगः ॥
यो वेदितव्य इति भाष्यकृतापि भाष्ये³-
विस्तारतो निगदितं करुणामयेन ॥ २२ ॥

शून्यो यदध्ययनतः समतामुपैति
विप्रो जनेन लघुकाष्ठविनिर्मितेन ॥

---

१ शर्मशातसुखानिचेतिकोषः । २ फलंसस्यम् । ३ व्याकरण-महाभाष्ये ।

मन्त्रोपरक्षणकृते परिरक्षितेन-
यद्वा जनेन तृणपुंजविनिर्मितेन ॥ २३ ॥

हीनः स्वरेण पदलोपयथ वर्णतो वा-
मंत्रोपि यस्य यजमानकृते क्षणेन ॥
वाणीमयाशनिपदे विनियोज्यतेरं-
मिथ्याप्रयुक्तिवशतो बहुयज्ञदक्षैः ॥ २४ ॥

सर्वार्थबोधनपटोरखिलार्थदस्य-
नामैव यस्य महितं विधिमार्गपांथैः ॥
सद्यो जनिं गतवतस्तनयस्य कर्णे-
संदिश्यते तदनुकूलगतिर्यथास्यात् ॥ २५ ॥
बुद्ध्वा धर्मीश्वरगुणानुगतं मनुष्यो-
नोपैति मृत्युभयमत्र कदापि काले ॥
जालेपि नैव पदमाशु दधाति भाले-
यस्यायमस्ति न पुनः स गृहादिवाले ॥ २६ ॥

हीनो यदध्ययनतः पुरुषो न वेत्ति-
विश्वेश्वरं सकलविश्वगतं दयालुम् ॥
न्यायाधिपं निखिलकर्मफलप्रदं तं-
यस्मात्परं न च महत्किमपीह दृश्यम् ॥२७॥

संप्राप्य यं गुरुकृपावशतः प्रयासै-
स्तैस्तैरलं गुरुकुले विधिवन्मनुष्यः ।

---

१ अशनिर्वज्रम्

पश्चादलभ्यमिह किंचिदपि स्वदृष्ट्या-
नो मन्यते विदितमस्ति समस्तमेतत् ॥ २८ ॥

बुद्ध्वा न बोद्धुमवशिष्यत इत्थमेव-
वेदांतिनोऽपि निगदंति समस्तभावैः ॥
सर्वत्र संस्थितपदार्थनिबोधनेयं-
शक्तं तथा सकलकर्मविधानदक्षम् ॥ २९ ॥

ये नाशयंति मनुजस्य कृताः स्वकाले-
पापानि गर्भमपि यातवतः स्वशक्त्या ॥
सीमंतपुंसवननिष्क्रमणादियोगाः-
प्रादुर्भवंति किल तप्यत एव जंतोः ॥ ३० ॥

नानाविधानि जनिमेत्य नरः समेति-
दुःखानि यानि कृतपाकवशेन लोके ॥
तान्यप्यनध्ययमतोस्य पुरातनाना-
मेतद्वचो न विफलं प्रतिभात्यमेद्य ॥ ३१ ॥

विप्राज्जिघांसति यमो जगतीह कस्मा-
दस्मिन्निदानविषये बहुमार्गितेऽपि ॥
धर्माधिकारविषदप्रतिपत्परंनो-
वक्ति प्रधानमगमान्नु निदानमस्य ॥ ३२ ॥

यात्प्रश्नये करगृहीतपलाशदंडा-
वातायुचर्मपरिवेष्टितमंजुदेहाः ॥

---

१ योगाः संस्काराः । २ सताम् ।

वन्यांबुपानबहुवृत्तफलैकभोगा-
स्ते वर्णिनो गुरुकुलं प्रतियांति चंडाः ॥ ३३ ॥

यत्प्रोक्तमेव सकलं वनितासखायः-
संध्याजपाग्निहुतितर्पणवैश्वदेवैः ॥
नानाविधप्रकरणैः सकलत्र लोके-
कुर्वंति पूजनमथागतसज्जनानाम् ॥ ३४ ॥

सर्वं विहाय सुखमग्रत एव यस्य-
निर्देशतो विधिमहापथगा मनुष्याः ॥
शीघ्रं वनानि फलमूललसद्वनानि-
धावंति चित्तपुटके प्रविचार्य विज्ञाः ॥ ३५ ॥

अग्नित्रयं नियमतो विनिवेश्य कुंडे
दीक्षावशेन धृतदीक्षितनामधेयाः ॥
यद्बोधितं विधिमिहानुसरंति लोके
केचिद्द्विजाः सुतकलत्रधनादिकामाः ॥ ३६ ॥

अध्यापनादविरतं समुपागताना-
मभ्यर्णमुत्तमतयाध्ययनेनचापि ॥
लोकेऽद्वितीयमनुजैरनुगम्यमानां-
यस्य द्विजाः प्रथितपाठकतामियंति ॥ ३७ ॥

यज्ञोपवीतविधिमध्यगतात्रिसूत्री-
देवर्षिपितृऋणमोचनचिन्हभूता ॥
यस्याज्ञयैव विनिबोधितकर्मबद्धा-
ऽवस्थात्रये द्विजवरैरुपधार्यते सा ॥ ३८ ॥

सर्वोत्तमा गुरुकुले वसुसिंधुसंख्या-
संयोगलब्धमित-कालक-यापनेन ॥
सा यत्कृते द्विजवरानुपयाति संज्ञा-
यामेत्य सर्वभुवनानि वशीकरोति ॥ ३९ ॥

भूतानि रोदयति यामधिगम्य जंतु-
र्दुर्शानि मंजुपदवीं रसकालयोगात् ॥
आलब्धकालकलनाविगमात्कुलेषु-
तामेति भूतलगतो लघु यत्कृते ना ॥ ४० ॥

वाणाक्षिवत्सरमितं समयं विनीय
सर्वार्थसाधनमयीमुपयाति संज्ञाम् ॥
मर्त्यो यमेन नियमेन यदर्थमेव-
लोके महद्गुरुकुलेषु सचायमेव ॥ ४१ ॥

अत्यन्तदुर्लभमपि प्रतियाति लोके-
यन्मंत्रभागनिचयं परिवीक्ष्य जंतुः ॥
साक्षात्तया ऋषिपदं सकलप्रशस्तं-
सर्वोपरिस्थितमहाः शुचि सोयमेव ॥ ४२ ॥

नित्यं वनेषु कृतपर्णकुटीनिवासाः
पूर्वे जनाः फलमयाशनसत्त्वभावाः ॥
येषामनंतमननान्मुनितामुपेताः
सर्वत्र विस्तृतयशोमयरम्यदेहाः ॥ ४३ ॥

---

१ [ ४८ ] आदित्य० । २ [ ३६ ] रुद्र० । ३ [ २५ ] वसु० ।

यत्तत्वमुत्तमतया निखिलप्रयासै-
र्लोके रसादवगतं कविभिः पुराणैः ॥
सर्वत्र तेन हि गता वद किं प्रसिद्धं-
सर्वोपकारिसुमहर्षिपदं प्रसन्नाः ॥ ४४ ॥

यस्यागमाय मनुजैः क्रियते जगत्या-
मस्यामनंतफलदो गुरुरस्य नित्यम् ॥
सेवाप्यथो निजशरीरमनोधनाद्यै-
र्मेधा समिद्धपरिणद्धविवृद्धभावैः ॥ ४५ ॥

यज्ज्ञानतो भवति नष्टविलोकनोपि-
नेत्रद्वयोदयवतामयतांयतांच ॥
लोकेगुरुर्जनिभृतां पथबोधकः किं-
नादर्शि विस्तृतमदो विबुधैश्चरित्रम्? ॥४६॥

नो दृश्यते समुदयेन विना कदापि-
यस्यामयेऽजरइति प्रथितः स देवः ॥
केनापि कुत्रचिदपि प्रथिमानमेत-
ल्लोके गतं समुदितं च बुधैः स्वभावात् ॥४७॥

यस्योदयेन भुवि दृश्यत एव सर्वैः-
शिष्यो गुरुत्वमुपयाति महत्वभावम् ॥
पश्चादुपैति सकलस्य तथा नियंता-
सद्भावतो भवति जन्मभृतश्च यंता ॥ ४८ ॥

---

१ श्रीविरजानंदवत । २ मनुष्यमात्रस्य ।

प्राचीनजन्मसमुपार्जितपुण्यपुंज-
प्राधान्यतो भवति यत्र कृती निसर्गात् ॥
बालोपि सर्वगुरुरेतदिह प्रसिद्धं-
पश्यन्ति किन्न शुकदेववदेव सिद्धम् ? ॥४९॥

लंबायमानकरणोपि सुवर्तुलोपि-
गौरोपि धान्यधनमालाविभूषितोपि ॥
पीनोपि हीनपदवीमुपयाति जन्तु-
र्यज्ज्ञानशून्यहृदयो न दयोपगम्यः ॥ ५० ॥

विज्ञायते जनिमितैः करुणावशेन-
यस्य [1]प्रधानपदवाच्यमदः समस्तम् ॥
मज्जंति यत्र धनमानमदोपलिप्ताः-
कूपोदरस्थितविपांडुरभेकपीनाः ॥ ५१ ॥

गेहस्थितं [2]वसु यथा दशयोपलिप्तो-
दीपो निबोधयति तत्तमसानुविद्धम् ॥
वेदस्तथा हृदयमध्यगतं वरेण्यं-
भर्गो निबोधयति तत्सवितुः प्रशस्तम्॥५२॥

राकापतेरुदयतस्तिमिरं यथारं-
पत्रांतरेषु परिलीय समेति नाशम् ॥
अज्ञानमस्य परिशीलनतस्तथैव-
लोकोदरस्थितमदांधमनःसुविष्टम् ॥ ५३ ॥

---

१ प्रकृतिरूपं । २ वसुद्रव्यम् । ३ वर्तिकया ।

धर्मः समस्तसुखसाधनमूलभूतो-
यं वीक्ष्य वृद्धिमुपयाति शशीव शुक्ले ॥
पक्षे नितांतमनुतांतमनाः प्रयाति-
नाशं यथायथमधर्ममधः कुपन्थाः ॥ ५४ ॥

सर्गोपि यस्य जनसर्गत आदि काले-
मार्गं निबोधयितुमत्र बभूव लोके ॥
लोका यथा न विचलेयुरनेकजाल-
मालावृते पथि विहाय तदेकमार्गम् ॥ ५५ ॥

लोकेश्वरस्य कृपया हृदये बभूव-
यस्य प्रकाश इह भव्यऋषीश्वराणाम् ॥
सर्गोदये परमशुद्धहृदां प्रसिद्ध-
सिद्धांतविद्धमनसां मनने रतानाम् ॥ ५६ ॥

कर्मादिभेदवशतो यजुरादिभेदा-
यस्यैकतामुपगतस्य विभांति लोके ॥
नो वास्तवे, तत इदं हृदये विचार्य-
मेकोयमस्ति सकलेऽपि न भिन्नरूपः ॥५७॥

यस्यांगतामुपगतानि लसन्ति सन्ति-
यान्यत्रभूमिवलये न लयं गतानि ॥
शब्दावबोधकरणाय षडेव तानि-
सर्वत्रविस्तृतिमितानि सुपुस्तकानि ॥ ५८ ॥

---

१ अग्न्यादीनाम् । २ षडंगानीत्यर्थः

केषां कथं कियदहो मनुजैर्विधेय-
मुच्चारणं क हलचोर्मिलिताक्षराणाम् ?
शुद्धस्वरोपगमनं क हलांविभिन्न-
मित्थं निबोधनपरा प्रथमास्ति शिक्षा॥५९॥

का का क्रिया कथममुत्र कदा विधेया-
कैः कै रिति प्रतिपदं विनिबोधको यः ?
संश्रूयते जगति कल्पपदेन सोऽयं-
वेदांगतामुपगतः प्रसभं द्वितीयाम् ॥ ६० ॥

किं शब्दजातमिह केन नियोज्यमारा-
द्रीत्या कया, भवति वास्य कथं नु सिद्धिः ?
विस्तार्य दर्शितमदः सकलं यथेष्टं-
दाक्षीसुतेन बहु यत्र तृतीयमेतत् ॥ ६१ ॥

कार्यं समस्तपदनिर्वचनं मनुष्यै-
र्वेदे कथं कथमदो बहुशः प्रदिष्टम् ॥
यास्केन यत्र विधिना नितरां निरुक्तं-
तुर्यं तदस्ति निगमांगमनन्यसंगि ॥ ६२ ॥

भूमण्डलस्थनिखिलार्थनिबोधनाय-
या दृश्यते गणितमात्रगतिर्जगत्याम् ॥
सर्वापि सा बहुभवेदिह यस्य मध्ये-
तज्ज्योतिषं, निगमपंचममङ्गमास्ति ॥ ६३ ॥

वेदोदरस्थितसमस्तवचोविभागे-
छन्दः किमस्ति, ऋषयश्च भवन्ति के के ?

के वा स्वरा इति विविच्य बलेन यत्र-
छन्दस्तदस्ति गदितं गुरु षष्ठमङ्गम् ॥ ६४ ॥

( युग्मम् )

पादोपमं प्रतिविभाति नु वृत्तशास्त्रं-
हस्तोपमं च किल कल्पपदेन वाच्यम् ॥
नेत्रोपमं गणितशास्त्रमथास्ति यस्य-
कर्णोपमं च निगदंति बुधा निरुक्तम् ॥ ६५ ॥

घ्राणोपमास्ति बहु यस्य शिवस्य शिक्षा-
वक्त्रोपमं जगति विश्रुतशब्दशास्त्रम् ॥
सोयं समस्तविमलांगयुतो मनुष्यै-
रध्यापनीय इति नात्र मतो विवादः ॥६६ ॥

[ युग्मम् ]

पादेन हीनमवगच्छति यो न वेत्ति-
छन्दः करेणरहितं गतकल्पमेनम् ॥
नेत्रेण हीनमथ सद्गणितेन शून्यं-
वेदं तथावधिरमेव निरुक्तशून्यम् ॥ ६७ ॥

शिक्षाविहीनमथ नासिकया विहीनं-
शब्दानुशासनविहीनमथास्यहीनम् ॥
ये ये पठन्ति मनुजा निगमं न ते ते-
गच्छन्ति तस्य विषयं बहुगुप्तमेकम् ॥ ६८ ॥

[ युग्मम् ]

एकाध्वबोधनपरस्य शताध्वभूता-
ये केचिदत्र भुवने प्रतिभांति भेदाः ॥
सर्वेपि ते ऋषिमहर्षिमुनिप्रणीता-
वेदस्य भाष्यपदवीमनुयांति कल्पाः ॥६९॥

सम्बोधयन्ति यदि ते निगमानुकूल-
मर्थं तदा तु नितरां बहु माननीयाः ॥
भिन्नं ततो यदि तदा विषमिश्रभोज्य-
कल्पा इमे न हि कदापि विलोकनीयाः ॥७०॥

सर्वेश्वरः स भगवानमरोस्ति मूलं-
शाखा ऋषीश्वरवर्धितुमिताः समस्ताः ॥
स्तस्यानि यस्य निखिलार्थमयानि सोयं
वेदः समस्तपुरुषैर्नितरामुपास्यः ॥ ७१ ॥

यस्यानुशासनपदं कपिलेन गीतं-
व्यासेन सत्कणभुजा बहुगोतमेन ॥
सम्बोधितं तदनु जैमिनिनापि कर्म-
योगेन पूजितपतंजलिनापि योगैः ॥ ७२ ॥

यन्नत्पुरा निगदितानि षडेव लोके-
वेदांगशब्दकथनेन विभांति तन्नत् ॥

---

१ शतपथादयोब्राह्मणाः । २ फलानि ।

तावन्त्युपांगपदवीमुपयांति सर्वं-
भावावबोधनपराणि नु दर्शनानि ॥ ७३ ॥

सर्वोपकारकरणाय समस्तलोके-
धर्मोपदेशकरणं प्रभवेदितीव ॥
बुद्ध्वा मनस्यलघुशब्दपथं प्रयातो-
यो माननीयपरमर्षिवशादगम्यः ॥ ७४ ॥

शब्दात्मकं यमवगत्य वृषत्वमत्र-
संयोजितं भगवता मुनिनेति मन्ये ॥
नोचेत्कथं यजुषि तस्य महोदयस्य-
तादृक्तया भवतु वर्णनमप्रमेयम् ॥ ७५ ॥

यस्य प्रचारविलयाद्भुवने समस्ते-
पौराणिको घनघटोपगमः समेत्य ॥
विज्ञानभानुममलंसमलोऽपि नून-
माच्छाद्य जन्म सफलं कलयांबभूव ॥७६॥

पौराणिकेन तिमिरेण बलेन रुद्धे-
यस्य प्रकाशनिकरे मनुजैर्मतानि ॥
नानामतानि विमतान्यपि सम्भवद्भि-
र्येषामभूदुदयतो भुवनं विनष्टम् ॥ ७७ ॥

शान्ते नितान्तमिह यत्र सहस्ररश्मौ-
दृप्तं भयानकतमध्वनिभिर्दिवान्धैः ॥

१ चत्वारिश्रृंगेतिमन्त्रे ।

खद्योतविद्युतिभिरत्र विधूद्भिमार्त-
वात्याऽखलिप्तमवलिप्तमपि प्रमत्तैः ॥ ७८ ॥

मूढैर्विलोक्य यदभावमभावदक्षै-
रार्वाचितं सुनिपुणाचितमत्र पश्चात् ॥
चार्वाजिभिः प्रलपितं कलिकालषण्डै-
र्भण्डैरपि स्वरचितं समभाणि चण्डैः ॥७९ ॥

उत्थाय दृष्टमभितो निजकार्यदक्षै-
रुद्दंभितं बलबहूनतबाहुदण्डैः ॥
सद्भिः क्षणेन बहुदुःखितमामिषाशैः-
पांषण्डभिस्तदनु खण्डितमुत्करण्डैः ॥८०॥

लीनन्दभेन, दययापि बलेन हीनं-
दीनं पुनर्धृतिकथाभिरथाभितोलम् ॥
शांत्यामृतं प्रगमितं सुमतेर्विलासै-
रुज्जृंभितं कुमतिकामकलाकलापैः ॥ ८१ ॥

शाक्तैरशक्तकरणैरपिशक्तमारा-
त्कापालिकक्षपणकादिभिरेकतोत्र ॥
वेगेन तेन हासितं चलितं च नुन्नं-
शूलेन पाशुपतवादिभिराविभिन्नम् ॥ ८२ ॥

आक्रांतमेकत इदं भुवनं जवेन-
जैनैरथोऽविरलनास्तकबौद्धसिद्धैः ॥
मौहंमदैरुत मसीमतवादिभिः किं-
विस्तारितं स्वमतमत्र न सर्वभावैः ॥ ८३ ॥

यस्मिन्मृगेंद्र इव शांतिमुपेयुषि द्रा-
ग्गोमायुगोखरगवेंद्रगणैः प्रबुद्धम् ॥
माद्यन्मतंगजसमुद्गतचीत्कृतीनां-
मालाभिरप्यविरतं स्थिरतामुपेतम् ॥ ८४ ॥

दूरे गतं मधुमधूकसुधासिताभ-
वाल्मीककोकिलमनोहरवाग्विनोदैः ॥
अभ्यर्णमागतमनर्गलकर्णशूलैः-
काकस्वनैरथ कपिंजलजल्पितैस्तैः ॥८५ ॥

यस्य प्रचारकरणेन जगाम लोके-
सर्वोत्तमं दशरथस्य सुतः पदं तत् ॥
नंदस्य सूनुरपि योगिपदेन वाच्यो-
मान्यो बभूव, किमतः परमस्य वीर्यम् ॥८६॥

जैनेंद्रहस्तिपरिभंजितसर्वशाखे-
यस्मिन्कुमारिलहरिस्त्रिजगत्प्रसिद्धः ॥
श्रीशंकरश्च समभूत् स्वबलेन याभ्यां-
विद्राव्य तद्रिपुगणान्परिवर्द्धितः सः ॥ ८७ ॥

प्राप्तेन तेन कलिकालमहर्षिणापि-
लोकं जवेन विलयं प्रसमीक्ष्य यस्य ॥
सर्वं नियोजितमभूदुदयाय शांत-
स्वांतेन विस्तृतशरीरमनोधनादि ॥ ८८ ॥

---

१ कूजितैरितिपाठांतरम् । २ श्री १०८ दयानंद सरस्वती स्वामिना ।

लोके विनाशमुपवीक्ष्य महेश्वरोऽपि-
यस्योदयाय शिवरूपमयस्य कंचित् ॥
मुक्तिं गतं तदवधेर्विलये विरक्तं-
संप्रेषयत्यमरतुल्यबलं मतं मे ॥ ८९ ॥

प्राणाञ्जहौ प्रबलयुक्तिबलो यदर्थे-
श्रीलेखराम इति मंजुलनामधेयः ॥
निर्मूलिताखिलमदो गुरुदत्तनामा-
वेगेन भूमिवलये यमनुप्रयातः ॥ ९० ॥

अद्यापि यस्य भुवने बहुभिः प्रकारैः-
कुर्वन्ति विस्तृतिमलं विबुधोत्तमास्ते ॥
येषां निदर्शितमहो ममकाभिधानं
कोऽन्यान्तरे विशदटिप्पणवर्णवंधे ॥ ९१ ॥

मुख्याधिपो गुरुकुलस्य यदर्थमेव-
हित्वा समस्तगृहसौख्यमिह प्रयासैः ।
संचेष्टते धनमनःकरणैरुपेतो ॥
विख्यातमस्ति जगतीतलमात्र एतत् ॥९२॥

यस्य प्रचारकरणाय कृतं यथाव-
देतच्छिवं गुरुकुलं पुरुषप्रकांडैः ॥
संदीयतेऽथ मनुजैर्द्रविणं च यस्य-
संवर्धनाय सकलैरपि नित्यमेव ॥ ९३ ॥

---

१ आर्यविद्वद्वर्णेने ।

यस्योदयाय विहिता परिषद् भवद्भि-
रेषाधुना गुरुकुले शुभवत्सरांते ॥
दूरागताखिलजनव्रजहर्षमूला-
विद्याविनोदरसिकैर्विबुधैश्च भव्या ॥ ९४ ॥

हे वर्णिनः ! स निगमो भगवान्भवद्भि-
र्वेद्यः स एव भुवनेऽत्र विवर्धनीयः ॥
सेव्यः स एव सकलैरपि नित्यमेव-
बोधेन यस्य कृतकृत्यपदं लभध्वम् ॥ ९५ ॥

सर्वोत्तमानि कपिलादिमहामुनीनां-
नामानि यानि निजनामपदे भवद्भिः ॥
संरक्षितानि न हि तानि यथा भवेयु-
र्व्यर्थानि तादृगधुना क्रियतां प्रयासः ॥९६॥

आशा समस्तजगतो भवतां पुरस्ता-
देषा मया निगदिता परतः प्रशस्ता ॥
शिक्षाप्रदापि नवभावगभीरवर्णा-
सेयं सुखाय परतश्च शिवाय भूयात् ॥९७॥

एतावदेव विनिवेद्य जनोयमन्ते-
गोष्ठीपतेस्तदनुसंस्थितपण्डितानाम् ॥
बद्धांजलिर्नतशिराः स्थिरभक्तिभावः
पादाम्बुजे निविशते कथयन्नमस्ते[1] ॥ ९८ ॥

---

१ इतिकथयन्नितिशेषः ।

प्राजीजनज्जगति यं जननी जगत्या-
मेका सुबुद्धिरिति विश्रुतविश्वकीर्तिः ॥
सोयं सनाढ्यकुलजातविदां सबन्धु-
र्वेदस्तुतेः शतकमादरतश्चकार ॥ ९९ ॥

सर्वैस्तदेतदधुना विनिवार्य दोषा-
न्दुग्धान्तरस्थसरघावदनुग्रहेण ॥
पूर्णं समाक्षममिति सादरमानिवेद्य-
तिष्ठामि, पद्यपठनाद्विरमामि सभ्याः ॥१००॥

१ सरघामधुमक्षिका ।

# "विषयप्रतिपादनस्य वैदिकी शैली ।"

( श्रीयुत पं० श्रीपाददामोदरशातवलेकरलिखिता )

सभा पते सभ्याश्च !

अद्य मया " विषय प्रतिपादनस्य वैदिकी शैली " इत्यस्य विषयस्य विचारः चिकीर्षितः । गंभीरस्य अस्य विषयस्य व्याख्यानाय यादृशी विद्वत्ता अपेक्ष्यते, यद्यपि न तादृशी मयि वर्तते, तथापि, अस्य महतो विषयस्य यावान् ऊहापोहः भवितुं आवश्यकः न तावान् कैरपि अद्यावधिआरब्धः, न च कोऽपि तस्योपक्रमाय अद्यावधि प्रवृत्तः, इति विचिन्त्य, "शीघ्रमेव तस्य उपक्रमो भवतु" इति आंतरिकबलवदिच्छाप्रेरणया एव भवतां समीपे अनेन प्रस्तावरूपेण किंचिद् वक्तुं प्रवृत्तोऽस्मि । इमां वास्तविकीं दशामवेक्ष्य भगवंतः पूज्यमहाशया ज्ञास्यन्त्येव यत् न अस्मान् मम प्रस्तावात् किमपि अज्ञातपूर्वं ज्ञानं प्रकटितं भविष्यति इति । वस्तुतस्तु भवाद्भिः स्वकीयबुद्धिसामर्थ्येन वेदमंत्रमहासागरस्य अवगाहनं कृत्वा तत्रत्य उत्तमोत्तमोपदेशः दैनंदिनीयव्यवहारप्रसिद्धये पंचजनानां पुरस्तात् स्थापयितव्यः इत्येतदेव भवतां समीपे एतत्प्रस्तावमिषेण अहं वक्तुकामोऽस्मि । यदि इमां मे अल्पीयसीं सूचनां अनुसृत्य संशोधनस्य कृत्यं भवद्भिः प्रारब्धं तर्हि मम अस्याल्पश्रमस्य सफलीकरणं जातमिति मन्ये ।

अथेदानीं प्रकृतं विषयमनुसरामि । कोऽपि ग्रंथः अध्येत-व्यश्चेत्, तस्य लेखनपद्धतिरवश्यमेव अनुसर्तव्या भवति । नोचेत् तस्य अध्ययनं महता कालेनापि सम्यक् कर्तुं अशक्यम् । सर्वेषामेव शास्त्राणां अध्ययनस्य अध्यापनस्य च समये एतदेव अनुसंधेयं भवति । अस्मद्देशललामभूतैः प्राचीनैः ऋषिभिः प्रणीतानि व्याकरण-न्याय-मीमांसा-सांख्य-योगा-द्यनेकानि शास्त्राणि सन्ति । तेषामेकैकस्य लेखनपद्धतिः अन्येभ्यो विशिष्टा वर्तते । स्वतंत्रपद्धतिमनुसृत्यैव तेन तेन ऋषिणा तत्तच्छास्त्रं लिखितमस्ति । पाणिनीयं अष्टाध्यायी-रूपं गीर्वाणभाषाया व्याकरणं मत्कथनस्य सत्यतां भवतां समीपे स्फुटीकरिष्यति । यदि केनापि अस्मच्छिष्येण तस्य विशेषपद्धतिमननुसृत्य अध्ययनं कृतं, अथवा अस्मद्गुरुणा आर्षप्रणालिं तिरस्कृत्य अध्यापनं कृतं, तर्हि व्याकरण-शास्त्रस्य सम्यग् ज्ञानं नैव शक्यम् । महता कालक्षेपेण ईषन्मात्रमपि सुफलं अध्ययनं नैव भवतीति दर्शनाय, प्रमाणा-न्तरस्य उद्धरणमनावश्यकमेव, या एषा प्राचीनानां शा-स्त्राणां स्थितिः, सैव आधुनिकानामपि वैज्ञानिकानां शास्त्रा-णाम् । गणित-भूगोल-खगोल-भूमिति-भूगर्भ-रसायन-यंत्रविद्यादीनां नानाविधानां शास्त्राणां अध्ययनस्य अध्याप-नस्य च प्रत्येकैकस्य शास्त्रस्य विशिष्टा रीतिरस्ति । तयैव पद्धत्या तत्तच्छास्त्र मधीतं चेत् तस्य ज्ञान शीघ्रं सुलभतया सुस्पष्टतया च भवति, अन्यथा कालक्षेपं विहाय नान्यः कोऽपि लाभो भवतीति अहर्निशमनुभूयते विद्यार्थिभिः अध्याप-कैश्च । यद्यपो प्राचीनानां अर्वाचीनानां च शास्त्राणां

स्थितिः विद्यते, तर्हि सर्वज्ञानमयस्य नानाविधविषयसंपूर्णस्य सनातनस्य वेदराशेः का अन्या स्थितिः भवितुं शक्नोति? किं तस्य लेखनशैलिमनुसृत्यैव अध्यापनं अध्ययनं च कोऽपि करिष्यति, तर्हि तस्य तत्त्वज्ञानं भवितुं शक्यम्? यदि न शक्यं तर्हि वैदिकधर्मीयैः वेदवाक्याद्दैनंदिनीयव्यवहारविषयस्य ज्ञानं कथं नाम अवगन्तव्यम्? कथं नाम तेषां ऐहिकी वा पारमार्थिकी वा उन्नतिः सेत्स्यति? इत्यर्थं अवश्यमेव तस्य लेखनपद्धतिः ज्ञातव्या। युरोपदेशीयाः अनेकभाषा-कोविदाः पंडिताः वेदस्य अध्ययनं कुर्वन्ति। वैदिकानां पदानां सूक्ष्मदृष्ट्या अवलोकनमपि कुर्वन्ति, परंतु वेदे किमपि विशेषं तत्त्वज्ञानमस्तीति न तेषां मतं भवति। ते विद्वांसः बुद्धिपूर्ववेदस्य विशेषं अर्थं नालोचयन्ति, अथवा कामतः विपरीत मेवाशयं आभासयन्तीति केचिद्वदन्ति, तन्निश्चयेन असदेव वर्तते। वस्तुतस्तु सायण-महीधरोवटादि-भाष्यानुसारेण गीर्वाण झेंदावेस्ता-खाल्डियन-हिब्रू-सारस्वतादीनां तुलनात्मकाध्ययनेन विशेषतः ऐतिहासिकपद्धतिमवलंब्य यथा वेदमंत्राणामाशयः प्रकाशयितुं शक्यः इति तैः प्रतीयते तथैव स्वकीयप्रमाणपुरःसरं ते लिखन्ति। एतत्प्रमाणमूलमेव तेषां आर्यव्यवहारपद्धतीनां अनुमानमपि भवति। ये तु ज्ञानतः एव ते विद्वांसः विपरीतमर्थं भासयन्तीति वदन्ति तैः युरोपीयपंडितप्रणीतानि पुस्तकानि अवश्यमेव द्रष्टव्यानि। तेषु च विशेषतः महान् सेंटपिटर्स-वर्गकोशः, वैदिकवाक्यसंहतिः, इत्यादीनि पुस्तकानि तुतेषां सादरमप्रमत्तं चाध्ययनमस्तीतिप्रकटीकुर्वन्ति। एतावता महता प्रयत्नेनापि वेदे न तैः किमपि अपूर्वं ज्ञानं

इदानीं पर्यंतं दृष्टम् । अतः वैदिकशैलीविज्ञानमन्तरा तन्नैव ज्ञातुं शक्यते इति प्रतीयते ।

यदा वयं आर्य्यवर्त्तदेशीयानां प्राचीनर्षीणां मतं पश्यामः तदा आलोचयामः, तेषां वेदमंत्रोपदेशेनैव सर्वे व्यवहाराः समचलन् इति । यथा-

वेदोऽखिलो धर्ममूलम् ० ॥ मनु ० ॥

वेदाद्धर्मो हि निर्बभौ ॥ मनु ० ॥

या वेदबाह्याः स्मृतयः ॥

याश्च काश्च कुदृष्टयः ॥

सर्वास्ता निष्फलाः प्रेत्य-

तमोनिष्ठा हि ताःस्मृताः ॥ मनु ० ॥

इति मनुराह । वेदबाह्यस्य स्मृतिवचनस्य सर्वथैव त्यागः कर्तव्यः इति यथा भगवता मनुना उक्तं तथैवान्यैः स्मृतिकारैरपि उच्यते । स्मार्ताः ग्रंथाः दैनंदिनीय-व्यवहार-साधका इति तु प्रसिद्धमेव । दैनंदिनीयव्यवहारसाधनीभूतानां स्मृतिग्रंथानां वचनप्रामाण्यं वेदमंत्रानुरोधेनैव आसीत् इति अत्र प्रतीयते । वेदमंत्रेभ्यः तत्तद्विषयस्य ज्ञानं तदानींतनैः विद्वद्भिः विज्ञातमेव भवेत्, अन्यथा कथं ज्ञायेत एतत् स्मृतिवाक्यं वेदोपदेशाद्विरुद्धं वा अनुकूलं वेति । यस्मिन्काले वेदविरुद्धस्य स्मार्तवचनस्य त्यागः कर्तव्यः वेदविरुद्धं वचनं तमोनिष्ठं न तु ज्ञाननिष्ठं चेति लिखितं, तस्मिन्काले वेदमंत्राणां अर्थः पद्धत्यनुसारेणैव ज्ञायतेस्म इत्यत्र न कोऽपि संदेहः । युरोपीयैः आर्यावर्तीयैश्च आधुनिकैः पंडितैः अद्यावधि न सा पद्धतिर्ज्ञाता,

अतएव न तैर्वेदे कोऽपिविशेषोऽर्थोऽधिगम्यते । एषा पौरस्त्य-पाश्चात्यानां पंडितानां मतस्थितिः ।

अनयोः पक्षयोः केवलेन समालोचनेन न अस्माकं कार्यं संपूर्यते । चतुर्वेदात्मको वेदराशिः अस्माकं सर्वेषां मनुष्याणां च धर्मप्रदर्शक इत्यस्माभिर्मन्यते । स्वधर्मग्रंथ एव स्वाध्यायः, स्वाध्यायश्चाध्येतव्यः, स्वाध्यायमंतरा अन्यत्राध्ययनश्रमः अधः-पतनाय एव भवतीति स्मरणात् । अतः वेदस्य एकैकं वाक्यं तस्याध्ययन शैलिमनुसृत्यैव अधिगंतव्यम् । ज्ञानं विना केव-लस्य भारभूतस्य ग्रंथस्य को वा लाभः ? युरोपदेशीयाः पंडिताः वेदस्य निरर्थकत्वमेव प्रतिपादयन्तु, प्राचीना ऋषयः तस्य सर्वोपयोगित्वं वर्णयन्तु, तन्नकिमपि अस्माकं कार्यं साधयि-ष्यति । वेदस्य कथं अस्माभिरध्ययनमध्यापनं च कर्तव्य मिति न तयोः अनुकूलप्रतिकूलवचनोद्धरणमात्रेण निश्चेतुं शक्यते ।

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ वैशे० दर्शनम् ।'

इति वैशेषिकीये दर्शने कणादो मुनिः वेदस्य वाक्यरचनां बुद्धिपूर्वकां आह । या नाम बुद्धिपूर्वकता अस्मिन्वेदवाक्ये सा अवश्यमेव द्रष्टव्या । 'अन्येषु पुस्तकेषु या न दृश्यते, वेदे च विशेषेण दृश्यते ' ईदृग्विधा का•लेखनशैली यत्र विद्यते सा अवश्यमेव द्रष्टव्या । नोचेत् तस्य याथातथ्येनाध्ययनं नैव कर्तुं शक्यते इत्यत्र न कोऽपि संदेहः ।

तत्रपूर्वं कोऽसौ वेदइति ईषन्मात्रमालोचयामि । मंत्रात्मकानां संहितानां एव वेदसंज्ञाग्यामन्तर्भावः, न ब्राह्मणोपनिषदादीनां

ग्रंथानां, इति कथनस्य तु नात्रावश्यकता। पूर्वमेव एतत्सर्वैः विद्वद्भिः ज्ञातमस्ति । मंत्रात्मकेषु संहिताग्रंथेषु तैत्तिरीयसंहिता ग्राह्या न वेति अत्र विचारणीयमस्ति तस्याः संहितायाः ब्राह्मण भागेन संमिश्रितत्वात् न तस्याः सर्वथा मंत्रात्मकत्वमेवावग-म्यते । यदि तत्रस्था मंत्रा एव ग्राह्या न ब्राह्मणभागः इति केचिद्वदन्ति, तर्हि तत्रत्यानां सर्वेषामेव मंत्राणां अन्यासु चतु-र्ष्वपि संहितासु अंतर्भावात्, तासां संहितानां ग्रहणेन तैत्तिरीय-शाखाम्नातानां मंत्राणां ग्रहणं भवत्येव इत्येतदपि तैः अवश्यं द्रष्टव्यम् ।

ऋग्यजुःसामाथर्वणां वेद इति संज्ञा प्रसिद्धाऽस्ति । तत्र-सामवेदे सप्ततिमन्त्रान् विहाय, अन्ये सर्वेऽपि मन्त्राः प्रायशो ऋग्वेदादेव उद्धृता दृश्यन्ते । इमेऽपि मन्त्रा पाठभेदेन तत्र वा अन्यतमस्मिन् वा वेदे भवेयुः ।

"या ऋक् तत् साम" इत्यादि बृहदारण्यकवाक्यात् साम्नः सम्पूर्णस्य ऋक्त्वमेव प्रतीयते । ऋग्वेदस्य अध्ययनेन सामवेदस्य अर्थः ज्ञात एव भविष्यति । सामवेदस्य स्वतन्त्र-वेदत्वं न अर्थभेदेन वर्तते, प्रत्युत गानादिविद्याप्रकाशकत्वे-नैवेति अनुमीयते । अनयारीत्या अर्थज्ञानविवक्षायां साम-वेदीयमन्त्राणां, ऋग्वेदीयेष्वन्तर्भावात्, स्वतन्त्रतया परिगण-नस्य प्रयोजनं नास्तीति सिध्यति ।

ऋग्यजुरथर्वसंज्ञका एव त्रयो वेदाः शिष्टाः । तत्र यजु-र्वेदे तृतीयांशः, अथर्ववेदे षष्ठांशश्च ऋग्वेदादेव उद्धृतो दृश्यते । अथवा ऋग्वेदे दृश्यमाना मन्त्रा एव तत्र तावन्तो दृश्यन्ते

इति वक्तव्यम् । शिष्टानां मन्त्राणां स्थूलसंख्यया परिगणनं कृतं चेत्—

ऋग्वेदे मन्त्रसंख्या १०४०२
यजुर्वेदे........ १४००
सामवेदे मन्त्रसंख्या ७०
अथर्ववेदे............ ७००

एतेषां सर्वयोगः १२५७२ भवति । स्थूलमानेन चतसृष्वपि संहितासु त्रयोदश सहस्रा मन्त्रा उपलभ्यन्ते । एषा मन्त्रसंख्या श्रीमद्भागवतस्य वा वाल्मीकीयस्य वा रामायणस्य श्लोकसंख्याया न्यूनैव वर्तते । तयोः क्रमतः अष्टादशसहस्रात्मिका तथा चतुर्विंशति सहस्रात्मिका श्लोकसंख्या वर्तते । पुराणेतिहासग्रंथा श्लोकसंख्यया महान्तोऽपि सन्तः मासार्धमासावधिमितेन कालेन पठितुं शक्यन्ते । परन्तु वेदस्य अल्पमन्त्रसंख्याकस्यापि अध्ययनं महतां विदुषामपि न सुकरं भवति । अस्य किं कारणं भवेत् ? मन्मते तु वैदिकलेखनपद्धति मनुसृत्य अध्ययनमिदानीं न भवति इत्येव तस्य कारणं दृश्यते ।

वेदस्य भाषासरणिरतीव सुगमा वर्तते । न तत्र बाणभट्टस्य दण्डिनश्च ग्रन्थे दृश्यमानानि-लम्बायमानानि समस्तानि पदानिसन्ति, वेदे न कुत्राऽपि शब्दलालित्येन समानाक्षरशब्दविन्यासेन वा अर्थविषयकः भ्रम उत्पादितः । प्रायः असमस्तानि पदानि, सुविज्ञेयाः शब्दाः, लघूनि वाक्यानि, दूरान्वयस्य अभावश्च वेदे दृश्यते । अल्पीयसि शब्दसमूहे महती अर्थप्रकटन-

शक्तिः यौगिकार्थपद्धत्या दृश्यते । एवं सत्यपि विदुषामवधानं वेदार्थविज्ञानविषये न अद्यावधि संलग्नमिति आश्चर्यम् । यानि कान्यपि कारणानि अस्मिन् विषये भवेयुः, परं तेषां मध्ये विषयप्रतिपादनस्य वैदिकीं पद्धति मनुसृत्य अध्ययन ध्यापनयोरभाव एव मुख्यं कारणमस्तीति मन्ये ।

एतेषां सर्वेषां प्रयोजनानां आलोडनादेव विज्ञायते, यदिदानीं भवत्सदृशैः विद्वद्भिः अवश्यमेव वैदिकलेखनशैलिविवरणाय यत्नः कार्यः । वैदिकधर्मानुयायिनां औदासीन्येन खलु महान् कालातिपातो जातः । इदानी मत ऊर्ध्वं अन्यत्र भ्रमकरणं सार्वभौमिकस्य वैदिकधर्मस्य विनाशायैव भवेत् अतः सादरं एतत्प्रस्तावद्वारा भवतां प्रार्थनां कृत्वा प्रकृतं विषयमनुसरामि ।

कोऽसौ वेदः ? तस्य किं लक्षणम् ? तस्मिन्केषां विषयाणां अन्तर्भावोऽस्तीति प्रथमं पश्यामि । श्रीमन्तः चतुर्वेदभाष्यकाराः सायणाचार्याः "अलौकिकार्थसाधको वेद" इति वदन्ति । नैतत्सम्पन्नंलक्षणं इति मे प्रतिभाति । वेदे केवलानां लौकिकानामर्थानामपि संगृहीतत्वात् । यथा—

अग्निर्हिमस्य भेषजम् ॥ ऋ०

इत्यस्मिन्मन्त्रे लौकिकशीत प्रतीकारोपायः प्रदर्शितः ।

संगच्छध्वं संवदध्वं संवो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते
॥ ऋ० १९१ । २॥

इत्यत्र जनानां सामाजिकमैक्यं, संवादेन च मनः-संस्करणं ज्ञापितं,

समानी प्रपा सह वो अन्नभागः ।
समाने योक्त्रे सह वो युनज्मि ॥
सम्यंचो अग्निं सपर्यत ।
आरा नाभिमिवाऽभितः ॥ अथर्व ३ ।३०।६॥

इत्यत्र भोजनादि व्यवहारस्य समानता, अग्न्युपासनायाश्च समानता वर्णिता तथा च ।

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते
रमस्व बहुमन्यमानः ॥ ऋ० ॥

इत्यत्र दुर्व्यसननिंदां कृत्वा कृषिकर्मण उत्तमता प्रदर्शिता यथाच-

आ यद् वाम् ईयचक्षसा, मित्र वयं च सूरयः ।
व्यचिष्ठ बहुपाय्ये, यतेमहि स्वराज्ये।ऋ०॥५।६६।६

इत्यत्र बहुपाय्यस्य स्वराज्यस्य सिद्धये जनपदस्थितैः पंचजनैः यादृशो व्यवहारः कर्त्तव्यः स प्रदर्शितः । अन्यच्च-

सुरा त्वमसि शुष्मिणी सोम एषः ॥
मा मा हिंसीः स्वां योनिं माविशन्ती
यजु० १९ । ७ ॥

हृत्सु पीतासो युध्यन्ते ।
दुर्मदासो न सुरायाम् ॥ ऋ० ८। २ । १२ ॥

इत्यत्र मद्यपानस्य निंदा तस्य शरीरापायकारणत्वं च सूचितम् इत्यादि प्रकारेण वैद्यक-गणित-तारा-विमान-

रथादिविषयप्रतिपादकाः केवलेहलौकिकविषयप्रतिपादकाः शतशो मंत्रा चतुर्ष्वपि वेदेषु संति । तेषां सर्वेषां अत्र लेखनं न आवश्यकम् । एवंविधानां लौकिकार्थप्रतिपादकानां मंत्राणां वेदे सद्भावात् केवलं "अलौकिकार्थ साधको वेद" इति तु वचनं न संगच्छते । वेदे पारमार्थिकोऽर्थो नास्तीति न केनापि वक्तुं शक्यते । तस्य तत्र सद्भावात् । अतः लौकिकानां अलौकिकानां च अर्थानां साधको वेद इति वक्तव्यम् । लौकिकस्य अभ्युदस्य अलौकिकस्य निःश्रेयसस्य च साधको वेदः वैदिकोधर्मो वेति निश्चयः ।

छंदोबद्धो ऋग्वेदः । गीतिषु सामाख्या, गानात्मकः सामवेदः । शेषे यजुः, गद्यात्मको यजुः । इति वेदत्रयस्य लक्षणानि महर्षिः जैमिनिः आह । पद्यगद्यगानरूपाणि शब्दरचनाविशेषपराण्येवैतानि लक्षणानि । नतु अर्थपराणि । अतः नैतानि अस्माकं कार्यं साधयिष्यन्ति । अर्थविचिकित्सायां शब्दानुपूर्वीमुद्दिश्य कृतानि लक्षणानि न कार्यक्षमाणि भवन्ति ।

"श्रुतिः, निगमः, आगमः, वेदः, स्वाध्यायः" इत्यादयो वेदपर्यायवाचकाः शब्दाः तस्य ज्ञानमयत्वमेव वर्णयन्ति । सत्यमेव ज्ञानमयो वेदः । यद्यपि सर्वेष्वपि ग्रंथेषु अल्पं वा महद्वा ज्ञानमेववर्तते तथापि वेदस्य सत्यज्ञानात्मकत्वात् सर्वेऽपि ज्ञानवाचिनः शब्दाः वेदे सार्थका भवन्ति अन्येषु ग्रंथेषु, तेषां रचयितॄणां अल्पज्ञत्वात् तत्र मिथ्याज्ञानादीनां भ्रमोत्पादकानां मलानां उपलभ्यमानत्वात् न तेषु "वेद"

इति शब्दः प्रयुज्यते । आध्यात्मिकाधिभौतिकाधिदैविकानां त्रयाणां विषयाणां सामान्यस्य विशेषस्य च ज्ञानस्य वेदे संग्रहोऽस्ति । एतज्ज्ञानमयत्वादेव वेदस्य वेदत्वं प्रसिद्धम् । सर्वमेव ज्ञेयं एषु त्रिविधेषु ज्ञानेषु अंतर्भाव्यते । एतस्मिन् त्रिविधे ज्ञाने उपलब्धे न किंचिदपि ज्ञातव्यमवशिष्यते । मनुष्याणां उन्नतिसाधकं निखिल ज्ञानं, मनुष्याणां सर्वाण्यपि कर्त्तव्याणि अत्रैव समाविशान्ति । ऐहिकानां पारलौकिकानां च विषयाणां तत्र संग्रहो जातः । अतः एतल्लक्षणो वेद इति शोभनं लक्षणम् ॥

अथ वेदमंत्राणां संहिताः कतिविधा भवितुं शक्नुवन्ति, तादिदानीं, आलोचयामि । (१) ऋषिक्रमानुसारिणी संहिता, (२) देवताक्रमानुसारिणी संहिता, (३) विषयक्रमानुसारिणी संहिता चेति मंत्राणां त्रिविधाःसांहिता भवितुंअर्हन्ति । चतुर्षु वेदेषु या ऋग्वेदीयसंहिता इदानीमुपलभ्यते सा प्रायशः ऋषिक्रमानुसारेणैव संगृहीता दृश्यते । यथा—

(१) प्रथमे मंडले माधुच्छंदस-काण्व-गौतम-कुत्स-दीर्घतमागरूपादीनाम्—

(२) द्वितीये मंडले गृत्समद-कूर्मादीनाम्-

(३) तृतीये मंडले विश्वामित्र-ऋषभ-कठ-प्रजापत्यादीनाम्-

(४) चतुर्थे मंडले वामदेव-त्रसदस्यु-पुरुमेधादीनाम्-

( ५ ) पंचमे मंडले वसुश्रुत–गय–धरुण–पुरु-श्यावाश्व-भौमादीनाम्–

( ६ ) षष्ठे मंडले भरद्वाज–सुहोत्र–गर्ग–शंयु–पायवादीनाम्–

( ७ ) सप्तमे मंडले वसिष्ठस्य वासिष्ठानाञ्च–

( ८ ) अष्टमे मंडले प्रगाथ-वत्स–नारद-मनु–विरूप-नोधादीनाम्–

( ९ ) नवमे मंडले हिरण्यस्तूप-देवल-कश्यप -भृगु-कक्षीवतादीनाम्, तथाच–

( १० ) दशमे मंडले आप्त्य–त्रिशिरा–यम–गौपायन-नारायणादीनां मंत्रा दृश्यन्ते ।

अथर्ववेदस्य सर्वानुक्रमो नाद्यावधि कुत्रापि प्रसिद्धः । गुर्जरदेशे हस्तलिखितः अथर्ववेदीयः सर्वानुक्रमणिकाग्रंथः स उपलब्धः, सतु इदानीं मन्निकटे वर्तते । तस्य प्रामाण्याप्रामाण्ये नाद्यापि मया निश्चिते ।

अथर्ववेदीये पूर्वदशके सूक्तसंहिताक्रमः विलक्षण एव दृश्यते । न स विषयानुपूर्वीं वा ऋष्यादिक्रमं वा देवताक्रमं वा अपेक्षते प्रत्युत मंत्रसंख्याक्रममेव प्रायशोऽनुसरति । तद्यथा–

( १ ) प्रथमे कांडे बहूनि सूक्तानि चतुर्मंत्रात्मकानि सन्ति, ( ३५ सूक्तेषु ३० सूक्तानि चतुर्मंत्रयुतानि )

( २ ) द्वितीये काण्डे बहूनि पंचमंत्रात्मकानि ( षट्त्रिंशत् सूक्तेषु २२ पंचमंत्रात्मकानि ).

( ३ ) तृतीये बहूनि षण्मंत्रमयानि ( ३१ सूक्तेषु १२ षण्मंत्रमयानि )

( ४ ) चतुर्थे बहूनि सप्तमंत्रयुक्तानि, ( ४० सूक्तेषु २१ सप्तमंत्रयुक्तानि )

( ५ ) पंचमे अष्टाधष्टादशान्त मंत्रसंख्याकानि सूक्तानि,

( ६ ) षष्ठे मंत्रत्रयात्मकानि ( १४२ सूक्तेषु १२३ मंत्रत्रयात्मकानि )

अत ऊर्ध्वं अनिश्चितमंत्रसंख्याकानि दृश्यन्ते । उत्तर दशकेतु विषयक्रमानुसारिणी सूक्तव्यवस्था दृश्यते । तद्यथा-

( १ ) एकादशस्य कांडस्य पूर्वार्धे वेदान्तविषयः, उत्तरार्धे युद्धविषयश्च,

( २ ) द्वादशे युद्धविषयः मातृभूमिविषयः, दान-विषयश्च,

( ३ ) त्रयोदशे सृष्ट्यादि विषयः, राष्ट्रविषयश्च-

( ४ ) चतुर्दशे विवाहविषयः,

( ५ ) पंचदशे व्रात्यविषयः, संन्यासिनोधर्म्मश्च

( ६ ) षोडशे सप्तदशे च कांडे साधारणोपदेशः ।

( ७ ) अष्टादशे अंत्येष्टि विषयः, पितृविषयः पुनर्विवाह-नियोगादयो विषयाश्च ।

( ८ ) एकोनविंशीये कांडे शांत्यादिविषयः,

( ९ ) विंशतितमं संपूर्णं कांडं प्रायश ऋग्वेदे दृश्यते । तत्तु इंद्रदेवतायाः मंत्रैः प्रायशः पूर्णं अस्ति ।

यजुर्वेदस्य सामवेदस्य च कीदृशी मंत्रव्यवस्था वर्तते सा तु मया न ज्ञाता। अतः तस्य विषये न किमपि वक्तुं शक्नोमि।

देवताक्रमानुसारिणी विषयक्रमानुसारिणी च संहिता नेदानीं कुत्राऽपि प्रसिद्धाऽस्ति। शाखान्तरीयसंहिता अपि क्वचित्पाठभेदेन एता एव संहिता सन्ति नान्याः। यत्तु कैश्चिदुच्यते शाखान्तरीयसंहिता तैत्तिरीय-माध्यंदिन-काण्वसंहितावत् भिन्ना एवेति तदसत्। न तैत्तिरीय-माध्यंदिन-काण्वसंहितासु पाठभेदं विहाय कोऽपिभेदो वर्तते। एवं शाखांतरीयाः संहिताः उपलभ्यमानाभ्यः संहिताभ्यो भिन्ना इति तु नैव प्रतीयते। प्रकरणगणनाभेदेनापि शाखांतरीय संहिताभेदो जायते। यथा शाकलसंहिता अष्टकाध्यायवर्गमानेन गण्यते सैव संहिता बाष्कलशाखायां मंडलसूक्तमंत्रक्रमेण विभज्यते। गणनाक्रमभेदं विहाय नान्यः कोऽपि भेदोऽस्ति। एतावता शाखांतरीयसंहिता एता एव नान्या इति सुस्पष्टं भवति।

त्रिविधासु संहितासु ऋषिक्रमानुसारिणी ऋग्वेदीय-संहिता दृश्यते इत्युक्तं पूर्वमेव मया। देवताक्रमानुसारिणी विषयक्रमानुसारिणी संहिता च नोपलभ्यते। प्रथमा तु इदानीमपि कर्तुं शक्यते। पृथ्वीस्थानीयान्तरिक्षस्थानीयद्युस्थानीयेति त्रिविधेन भेदेन देवता विभज्य अग्न्यादिभिः पृथ्वीस्थानीयाभिः वाय्वादिभिरंतरिक्षस्थानीयाभि, सूर्यादिभिः द्युस्थानीयाभिः देवताभिरधिष्ठितानां मन्त्राणां यथाक्रमं संग्रहेण देवताक्रमानुसारिणी संहिता भवितुं शक्नोति। एषा

व्यवस्था मया कृताऽस्ति । तेन चतुर्णामपि वेदानां एवं प्रकारेण संग्रहे कृते साति मंत्रार्थविज्ञानं सौलभ्येन भवतीति प्रतीयते । ये तु सर्वानपि वेदान् कण्ठस्थी कुर्वन्ति न तेषां अर्थे एषा संहिता उपयोगिनी भवेत् । परन्तु चतुर्णामपि वेदानां कण्ठस्थीकरणं सांप्रतं दुःसाध्यमेव, अन्येषामपि अध्येयानां विषयाणां बाहुल्यात् । अतः देवताक्रमानुसारिणी संहिता अध्ययनसौलभ्याय कर्तव्येति अत्र सूचयामि ॥

वेदे आध्यात्मिकाधिभौतिकाधिदैविकरूपाः त्रिविधाविषयाः संतीति मया पूर्वमेवोक्तम् । एषु सर्वेऽपि मानवव्यापाराः साकल्येन समागच्छन्ति । सांप्रतं भौतिकेति शब्दो भिन्नमेवार्थं दर्शयति । भौतिक-ज्ञानमिति शब्दः "दैविक-ज्ञान" मित्यर्थे विनियुज्यते । वायु-जल-विद्युदग्नि-वनस्पत्यादीनां देवतानां यज्ज्ञानं तदैवतं ज्ञानं न तु भौतिकम् । सर्वस्याप्याधुनिकस्य विज्ञानस्य अस्मिन्नेवाधिदैविक ज्ञाने अंतर्भावो भवति । यानि आधुनिकानि वा प्राचीनानि वा प्रकृतिविज्ञानप्रतिपादकानि शास्त्राणि तानि सर्वाण्यपि आधिदैविक शास्त्राण्येव न तु आधिभौतिकशास्त्राणि । "पंचमहाभूत" शब्दे यो "भूत" इति शब्दो वर्तते सोऽपि दैवतवाचक एव । पंचमहाभूतानां वैदिकभाषायां पर्यायशब्दःपंचमहादैवतानीत्येव भवति वेदे भूतशब्दः आधिभौतिकशब्दश्च प्राणिमात्रसंबंधं दर्शयति । मूलतः भौतिकेतिशब्दः प्राणिवाचकः सन्नपि आधुनिकभाषायां दैवतार्थ सूचकः संजातः । मनुष्यपशुपक्ष्यादि प्राणिविषयकाः सर्वेऽपि व्यवहाराः "आधिभौतिक" विषये सम्यक्तया अन्तर्भवन्ति । मनुष्यैः अन्यैः प्राणिभिः सह कथं

व्यवहर्तव्यम्, मानवैः अन्यैः मनुष्यैः सह कथं आचरितव्यम् इत्यादिकं सर्वमपि ज्ञानं अस्मिन्नेवाधिभौतिक विषये समागच्छति। मनुष्याणां वैयक्तिकानां, सामाजिकानां, गृहसंबंधिनां, राज्यसंबंधिनां, यानि यानि कर्तव्याणि तानि सर्वाण्येन अनेन विषयेण ज्ञायन्ते। त्रिष्वपि विषयेषु एष मध्यमो-विषयः मनुष्यमात्रव्यवहारप्रदर्शकत्वान्मुख्यश्च। आध्यात्मिकः प्रथमः, आधिदैविकोऽन्त्यः। मनुष्यादिशरीरांतर्गतानां आत्मबुद्ध्यादिपदार्थानां ज्ञानं आध्यात्मिकविषयादवबुध्यते। स्थूलसूक्ष्मकारणशरीराणां ज्ञानकर्मेंद्रियाणां मनोबुद्धिचित्ताहंकारजीवात्मनां च सकलं याथातथ्येन ज्ञानं अस्मिन्नेव विषये अंतर्भवति। अन्तिमे आधिदैविकविषये अवशिष्टं निखिलं ज्ञानं समाप्यते। निखिलं सृष्टिविषयकं ज्ञानं अत्रैवान्तर्भवति। पृथिव्यप्तेजोवायुखपर्जन्यविद्युत्सूर्यचन्द्रनक्षत्रोल्कादीनां सर्वं विज्ञानं, सृष्ट्युत्पत्तिस्थितिप्रलयादि ज्ञानं च अनेनैव विषयेण लभ्यते। एषा त्रिविधस्य विषयस्य व्याप्तिः। एतेषां त्रिविधानां विषयाणां साधारणं विशिष्टं च ज्ञानं क्वचिद् बीजरूपेण, क्वचित् सूक्ष्मध्वनिरूपेण क्वचिद्विस्तरेण वेदे प्रकाशितमस्ति। एतत्त्रिविधं ज्ञानं मनुष्यमात्रस्य उन्नतिसाधनाय नितरां आवश्यकमस्ति। तत्साकल्येन वेदे वर्तते, एतदेव वेदस्य महत्वं। अतएव तस्य पद्धत्या समग्रो वेदोऽध्येयो ज्ञेयश्चेति वदन्ति सर्वेऽपि मुनयः। अतः तां पद्धतिं दिङ्मात्रेण अत्र उल्लिखामि।

वेदे प्रायशः त्रिविधेन प्रकारेण सर्वेऽपि विषयाः प्रतिपादिता दृश्यन्ते। प्रथमं अन्वर्थकेन नाम्ना विषयः निरूप्यते। स एव

आशयः विशेषणेन अन्यत्र प्रकाश्यते। स एव पुनः विस्तरेण वाक्यसमूहेन प्रतिपाद्यते। अथवा यौगिको वा योगरूढिगतो वा यो अर्थो नाम्नि दृश्यते, सएवान्यस्मिन्स्थले विशेषणभूतेन शब्देन ध्वन्यते, तृतीये स्थाने स्वतन्त्रेण वाक्येन तस्यैव व्याख्यारूपेण प्रतिपादनं आलोक्यते। एष नियमः प्रायशः वेदे सर्वत्रैव अनेकेषां विषयाणां स्फुटीकरणार्थं अवलम्बित इति मया दृष्टम्। तद्यथाः—

"गौ, ग्मा, ज्मा" इत्येते शब्दा गत्यर्थकयोर्गच्छति-जमत्योः भवन्ति। तेषां यौगिकोऽर्थः गतिरूप एव। प्रकृति-प्रत्यययोः यः सामवायितोऽर्थः। दीपस्योपरि आवरकः काचः यादृशस्य वर्णस्य भवेत् तादृशवर्णो दीपो भवाति, परंतु तस्य प्रकाशदातृत्वं यथा नैव छिद्यते, एवमेव धातुःप्रकृति-प्रत्ययाभ्यां संन्निकृष्टाभ्यां उच्चावचार्थद्योतको भवति, परन्तु तस्य प्रकृत्यर्थो नैव अवहन्यते। यथा प्रगमनमागमनं इत्यत्र गच्छतेः गत्यर्थो नैव हन्यते एवमेव पूर्वोक्तेषु "गौः, ग्मा, ज्मा" इत्येतेषु शब्देषु गत्यर्थो विद्यते एव। वेदमंत्रेषु यौगिकार्थे तिरस्कृते सति स्वल्प एव उपदेशः प्राप्स्यते। ये विद्वांसः ऐतिहासिकभावनया तुलनात्मकाध्ययनेनैव वेदस्य अर्थं पश्यन्ति ते तत्रत्यां बुद्धिपूर्विकां वाक्यरचनां नैव ज्ञातुं शक्नुवन्ति। रूढार्थावलंविनोऽपि तथैव वंचिता भवन्ति। श्रीमद्दयानन्दस्वामिभिः अस्मिन्नंधश्रद्धावसरे यौगिकार्थस्य पुनः जागृतिः कृता। श्रीसायणाचार्यैस्तु यौगिकार्थो नैवलक्ष्यीकृतः परन्तु रूढार्थस्य प्राधान्यं एव

सर्वत्रावलम्बितम् । अस्तु । वेदार्थावसरे शब्दानां धात्वर्थ-प्रधानत्वं अवश्यमेव अवसंधातव्यमिति तात्पर्यम् ।

धात्वर्थप्रधानबुध्या " गौः ग्मा ज्मा " इति शब्दानां निरीक्षणेन तेषां गतिमत्वं अवलोक्यते । तेन तेषां विनियोगः गतिमत्स्वेव पदार्थेषु सार्थो भवतीति अनुमीयते । सर्वेषां गतिमतां पदार्थानां वाचका एते शब्दा भविष्यन्ति वा नेति स्वतन्त्रः प्रश्नः । शब्दानां नूतने अर्थे विनियोगः नास्माभिः कर्तुं शक्यते । वयं तु तत्र परतन्त्राः न स्वतन्त्राः । आह्लादार्थकः चन्द्रशब्दः चन्द्रमासि एव किमर्थं उपयुज्यते, किं स अन्यस्मिन्कस्मिंश्चिदपि आल्हाददायके पदार्थे नोपयुज्यते इत्युक्ते, तथाकरणे सर्वेऽपि भाषाप्रवाहपतिता जनाः असमर्था एव इति ब्रूमः । वैदिकभाषायां यः शब्दो यत्रोपयुक्तः तस्य तत्र सार्थकताऽस्ति वा नेति विवेक एव अस्माकं कर्म । तदेव वयं कुर्मः । प्रस्तुत इदानीं गवादीनां शब्दानां विषयः । ते शब्दाः पृथिवीशब्दस्य अपरपर्यायाः । तेषु द्योतमानं गतिमत्वं पृथिव्यां संघटितं भवति नवेति विचिकित्सा इदानीं कर्तव्या । अन्ये बहवः पदार्था गतिमन्तः सन्तु, यस्यां पृथिव्यां वेदेन गौः इति शब्दः उपयुक्तः तस्याः पृथिव्याः स्वयं गतिमत्वात् सार्थकता एवास्तीति अवगन्तव्यम् । गत्यर्थकोऽग्निशब्दः किमर्थं वह्निवाचकः? गत्यर्थकश्च गौशब्दः किमर्थं पृथिवीवाचकः ? एतौ शब्दौ अन्योन्यस्य बोधकौ किमर्थं न स्याताम् ? इत्येवं प्रश्ने कृते तेन वेद एव प्रष्टव्य इति वदामः । यदि कश्चित् ज्योतिर्विदं एवं पृच्छेत् यत् सूर्यस्य स्थाने किमर्थं चन्द्रोन स्थापितः चन्द्रस्य मण्डलं सूर्यमण्डलान्न्यूनं

किमर्थं कृतं तर्हि स ज्योतिर्वित् किं वदेत् ? यद्यपि ज्योतिर्विदः एवंविधानां प्रश्नानां उत्तरं न दातुं शक्नुवान्ति न च एतन्नक्षत्रं अन्यत्र स्थापयितुं शक्नुवन्ति तथापि दिव्यानां ज्योतिषां गत्यादिज्ञानं तैः ज्ञायत एव । एवमेव शब्दशास्त्रविदोऽपि शब्दस्य सार्थकतां वा निरर्थकतां वा विचारयन्ति परन्तु शब्दस्य अन्यथोपयोगकरणे तेषां शक्तिर्नास्ति । इदानीं प्रस्तुतोऽस्माकं विचारः अस्मदधिकारमर्यादां नैवातिक्रामति । अस्तु । एतेन धात्वर्थपूर्णत्वं यौगिकार्थयुक्तत्वं वा वैदिकशब्दानां नैसर्गिकमेवेति सिद्धम् । तेन पृथ्वीवाचकैः गवादिभिः शब्दैः तस्याः गतिमत्त्वं सूच्यते इति अत्र सिध्यति । एष एव अर्थः अन्यैः विशेषणभूतैः शब्दैः कथं सूच्यते इतीदानीं पश्यामि । —

ममत्तु नः परिज्मा वसर्हा ।
ममत्तु वातो अपां वृषण्वान् ॥ऋ० ॥

“परिज्मा वसर्हा वासयिता नः ममत्तु” इत्यस्मिन् मंत्रे सर्वेषां स्थावरजंगमपदार्थानां निवासभूतस्य वाचकः वसर्हा इति शब्दः । तस्य परिज्मा इति विशेषणम् । यः गवादिषु त्रिष्वपि शब्देषु गत्यर्थो दृष्टः स एव अस्मिन्नपि शब्दे दृश्यते । ज्मातिधातो यथा ज्मा इति रूपं भवति तथैव ज्मा [ ज्मन् ] इत्यपि भवति । अनया शब्दयोजनया पृथिव्याः सर्वतो भ्रमणमपि सूचितम् । परिभ्रमणार्थकः परिज्मतिशब्दः अत्र दृश्यते । स एव अर्थः —

या गौ र्वर्तनिं पर्येति निष्कृतम् ।
ऋ० । ८ । २ । १० ॥

आयं गौः पृश्नि रक्रमीदसदन्मातरं पुरः।
पितरं च प्रयन्त्स्वः॥ यजु०।३।६॥

अत्र स्पष्टवाक्येन आम्नातः। इयं पृथिवी अंतरिक्षमाक्रमति। एषा पृथिवी निश्चितेन मार्गेण परिभ्रमति। इति विज्ञानं अत्र प्रदर्शितम्। "गौः अक्रमत्" "गौः पर्येति" इत्यत्र शब्दार्थसंबंधः विशेषतया द्रष्टव्यः। तस्य यौगिकोऽर्थः "गंत्री गच्छतीति" भवति। "गौः" इति शब्देन पृथिव्याः स्वकीयं दैनंदिनीयं भ्रमणं सूचितं, तथा च "पर्येति" "अक्रमत्" इति शब्दाभ्यां तस्या सांवत्सरिकं परिभ्रमणं सूचितमिति प्रतीयते। यः आशयः "गौः,ज्मा, ज्मा" इत्येतेषु शब्देषु वर्तते स एव "परिज्मा" शब्देन दर्शितः स एव आभ्यां मंत्राभ्यां प्रतिपादितः। एकस्यैव पृथिवीभ्रमणविषयस्य त्रिविधेन मार्गेण द्योतनं वेदं विहाय नान्यत्र कुत्रापि उपलभ्यते। अस्यैव मतस्य पुष्टये अन्येषामपि विषयाणां वाक्यानि विशेषणानि नामानि च अत्र उद्धरामि।

"शुंध्युवः" इति शब्दःसूर्य्यकिरणवाचकः वेदे समाम्नातः "सप्त शुंध्युवः" "सप्त गभस्तयः" "सप्त रश्मयः" इत्यादयः सर्वेऽपि शब्दाः सूर्यस्य सप्तकिरणानां वाचकाः। तत्र "शुंध्युवः" शब्दः तेषां किरणानां शोधनधर्मत्वं प्रकाशयति। वाय्वादीनां शुद्धीकरणं सूर्यकिरणस्य प्रसिद्धो धर्मः। स तु अस्माच्छब्दात्स्फुटो भवति स एव आशयः विशेषणीभूतेन शब्देन कथं प्रदर्शित इति द्रष्टव्यम्।

सप्त त्वा हरितो रथे वहंति देव सूर्य।
शोचिष्केशं विचक्षण॥ ऋ०१।४।८।८॥

इत्यस्मिन्मंत्रे सूर्यस्य 'शोचिष्केश' मिति विशेषणमाम्नातम् । शुद्धीकरणसमर्थाः किरणा यस्य तं शोचिष्केशं सूर्यं सप्त हरितः किरणाः वहन्ति इति मंत्राशयः । किरणवाचिनि शुंध्युव इति शब्दे य आशयोऽस्ति स एव शोचिष्केशमिति विशेषणेन प्रदर्शितः । स एव भावः—

गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय जिन्वति ॥ ऋ० ॥

अस्मिन्मंत्रे वर्णितः । अद्रिभिः सुतः सोमः गभस्तिभिः पूतो भवति इति मंत्राशयः । अत्र सूर्यकिरणद्वारा अशुद्धिनिवारणरूपेण शुद्धीकरणमुक्तम् । सूर्यकिरणानां शुद्धीकरणधर्मोऽत्र विस्पष्टतया प्रकाशितः । "शुंध्युवः" इति नाम्ना, शोचिष्केशमिति विशेषणेन यत् प्रतिपादितं तदेव एतेन वाक्येन प्रतिपाद्यते । तथा च—

"ओषधीः" इति शब्दः "दोषधी" शब्दस्यैव रूपमिति यास्कः प्रत्यपादयत् । वनस्पतिभिः शरीरस्थिताः दोषा धूयन्ते । एतदर्थमेव तेषां विनियोगः वैद्यशास्त्रे उक्तः । ता वस्तुतः दोषधयः संतः ओषधय इत्युच्यंते । भवतु नाम तेषां भिन्नं उच्चारणम् । न तेन मूलार्थोऽवहन्यते । एष एव आशयः "यक्ष्मघ्नी ज्वरघ्नी" इत्यादि पदैः विशेषणभूतैः प्रतिपादितः । दोषमूलका एव नानाव्याधयः । तेषां हंतारः औषधयः इति तु तैस्तैः शब्दैः ध्वन्यते । स एव आशयः—

ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥

**नाशयित्री बलासस्यार्शस उपचितामसि ।**
**अथो शतस्य यक्ष्मणां पाकारोरसि नाशनी ॥**
**यजु० १२ ॥**

इत्यादिषु मंत्रेषु ओषधीनां व्याधिविनाशकत्वं दर्शयित्वा प्रतिपादितः य आशयः ओषधिशब्देन प्रदर्शितः, स एव यक्ष्मघ्नीत्यादि विशेषणेन, स एव उक्त मंत्राभ्यां विशदीकृतः ।

पृथिव्याः भ्रमणं सूर्यरश्मीनां धर्मः, ओषध्यादीनां गुणाः, इत्यादीनां विषयाणां प्रतिपादने वेदेन कीदृशी शैली स्वीकृता इत्यत्र तत्वतः प्रदर्शितम् । अन्येषां आधिदैविकाधिभौतिकाध्यात्मिकानां विषयाणां एवमेव प्रतिपादनं तत्र वर्तते । तस्य स्पष्टीकरणार्थं भौतिकविषयांतर्गतान् विषयानालोचयामि ।

"राजृ दीप्तौ" इत्यस्माद्धातोः "राजा" इति पदं सिध्यति । राजते प्रकाशते इत्यसौ राजा । स्वसामर्थ्येन राजते इति तस्य यौगिकोर्थः तस्माच्छब्दाद् "राज्य" शब्दस्य सिद्धिर्भवति । राज्ञः इदं राज्यम् । राज्ञोधिकारांतर्गतत्वं राष्ट्रस्यानेन शब्देन ध्वन्यते । जनैः अनियंत्रिता राज्यशासनपद्धतिश्चात्र सूच्यते । स एव आशयः "राष्ट्री" इति राज्ञो विशेषणेन दर्शितः । "राष्ट्रमस्यास्तीति राष्ट्री" । यस्य अर्थे राष्ट्रं वर्तते स पुरुषः राष्ट्रीशब्देन द्योत्यते सोऽनियंत्रितो राजा एव । स एव आशयः–

**राजा राष्ट्राणां पेशो० ॥ ऋ० ७ ।३४।११ ॥**

**राजा हि कं भुवनानामभिश्रीः ॥ ऋ० ॥**

आभ्यां मन्त्राभ्यां प्रकटीकृतः । राजा एव राष्ट्रस्य रूपं, स एव तस्य संपद् इत्याशयःअत्र स्फुटोऽस्ति नात्र लेशमात्रमपि जनानां मताधिकारः समालोच्यते । एवं त्रिप्रकारेण अनियंत्रितं राजशासनं वर्णितम् । लोकसभावर्णनमपि एवमेव प्रकारत्रयेण कृतमस्ति । तद्यथा—

"संगच्छध्वं" इति पदं ऋग्वेदस्य अंतिमे सूक्ते समाम्नातम् । हेजनाः! सम्यगेकीभूय गच्छध्वमिति तत्र वेदस्योपदेशः जनैः स्वोन्नत्यर्थं दुर्भेद्यः संघः कर्तव्यः, सभायां तैः संगत्य तत्र स्वकीयस्य अभ्युदयस्य विचारः कर्तव्यः इत्याशयः तत्र दृश्यते । स एव आशयः "समानी सभा" "समानी समितिः" इत्यादिषु विशेषणभूतेषु समानशब्देषु प्रतिबिम्बितो भवति । का नाम समानी सभा ! यत्र सर्वेऽपि जनाः समानतया समागच्छंति सा एव समानी सभा भवितुमर्हति । यत्र तु जातिविशिष्टा वा मतविशिष्टा वा जना एव आगच्छन्ति न सा समानी सभा भवति किं तु विषमैव सा सभा । एवं विषमासभा न जनपदस्य उद्धाराय भवति प्रत्युत तस्याधोगमनाय भवति । अतो वेदे उक्तं "संगच्छध्वं" "समानी समितिरिति" च । एवं विधायाः समानायाः सभायाः महान् लाभो भवतीति बहुभिः मंत्रैः प्रतिपाद्यते । यथा—

**सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने ॥**

**येना संगच्छा उप मास शिक्षाच् चारु वदानि पितरः संगतेषु ॥ अथ० ॥**

विद्म ते सभे नाम नरिष्टा नाम वा असि ।
ये ते के च सभासदास्ते मे संतु सवाचसः
अथर्व० ॥

ध्रुवाय ते समितिः कल्पतामिह ॥ अथर्व० ॥

इत्यादिषु मंत्रेषु सभायाः समितेश्च जनपदहित-कारित्वं सभासदां पितृस्थानीयत्वं च सूचितं । सभाया नरिष्टेति नाम अत्राम्नातम् । तस्य भावः सभा सुखकारिणी दुःखनिवारिणी चेति सुप्रसिद्धः । सभ्यैः सुखवृद्धये दुःखप्रतिबंधाय एव संगन्तव्यमिति तात्पर्यम् ।

अथेदानीं प्रजानियंत्रितस्य स्वराज्यस्य विषयमालोचयामि । स्वराज्यशब्दस्य यौगिकोऽर्थः "स्वप्रकाश" इति । यस्मिन्राज्यशासने, राज्यस्य साम्राज्यस्य वा समष्टिभूते तेजसि, राष्ट्रावयवभूतानां सर्वेषामपि जनानां तेजसामन्तर्भावो भवति तदेव स्वराज्यपदवाच्यं शासनं भवितुमर्हति । यत्र तु शासनविषये जनपदमतं तिरस्क्रियते तत्र स्वराज्यं प्रत्युत तत्केवलं राज्यं, यस्य विषयः पूर्वमेव प्रतिपादितः । एष एव स्वराज्यपदस्यार्थः ऋग्वेद मंत्रे वर्तते ।

आ यद्वामीयचक्षसा मित्र वयं च सूरयः ।
व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥ऋ० ॥

अस्मिन्मंत्रे स्वराज्यस्य विशेषणभूतेन बहुपाय्यशब्देन जनपदानियंत्रितता व्यक्तीकृता । बहुभिः अनेकैः सभ्यैः पालनीये स्वराज्ये यतेमहि इति वेदमन्त्रार्थः । स्वराज्य-शब्दान्तर्गत एव आशयः बहुपाय्यशब्देन ध्वनितः । वेदे तु

राज्यशासनविषयस्य प्रतिपादका मंत्रा बहवः संति । न तेषामत्र विवरणमिष्यते अप्रस्तुतत्वात् । वेदे आधिभौतिक-विषयाणां कीदृशी प्रतिपादनशैली अस्तीति अत्र कैश्चि-दुद्धृतैर्मंत्रै स्पष्टीभविष्यति ।

अत्रोद्धृतैरुदाहरणैः विदितं भवति यद् वेदे प्रतिपादितो-विषयः त्रिभिः प्रकारैः प्रतिपाद्यते इति । सर्वेषां नाम्ना-मन्वर्थकत्वात् तेषां नाम्ना अर्थविज्ञानेनैव विषयस्य विज्ञानं भवति तस्यैव विशदीकरणं अन्वर्थकेन विशेषणेन भवति । तथात्र स एव विषयः स्वतन्त्रैः स्पष्टवाक्यैः व्याख्यायते । अनेकेषां विषयाणां पर्यालोचनेन एष नियमोऽस्तीति मे प्रतिभाति । अत्र सभायां उपस्थितैः प्रज्ञानेत्रैः विद्वाद्भिः अन्यान्यविषयप्रतिपादकान् मन्त्रान् दृष्ट्वा अस्य नियमस्य व्याप्तिः समालोचयितव्या इति प्रार्थये । अत ऊर्ध्वं विभक्ति-विपरिणामविषयमालोचयामि ।

वेदे प्रायशः विभक्तिविपरिणामो दृश्यते । लौकिक-भाषायां कचिद्भवत्येव परन्तु वेदे तस्य प्राचुर्यं वर्तते । छन्दसि बहुलमित्यत्र बहुलपदेन भगवता पाणिनिनाऽपि स एव आशयः व्यक्तीकृतः । वेदे किमर्थं विभक्तिविपारिणामो दृश्यते, लौकिक भाषायां तथा किं न दृश्यते, वैदिको विपरिणामः सहेतुको वा निर्हेतुकः इति अत्र विचार्यम् । केचित्तु छन्दसि बहुलमित्यस्याश्रयेण यथेच्छं शब्दार्थच्छलं-कुर्वान्ति, तत्तु चिन्त्यमेव युरोपदेशीयास्तु पण्डिता विभक्ति विपरिणामं लिङ्गविपारिणामं च वेदे दृष्ट्वा वैदिकभाषाया अपरिपक्वतां समर्थयन्ति । असंस्कृतानां प्राथमिकानां

जनानामेषा भाषाऽसीदिति ते वदन्ति। भाषायाः मनुष्याणां च असंस्कृत्वात् एकया एव विभक्त्या अनेकासां विभक्तीनां अर्थबोध आसीत्तदानीम् । एकैका विभक्तिः स्वतंत्रतया नियत-कार्यकरणक्षमा यदा नासीत् तदानीं वेदस्य लेखनं कृतमिति ते वर्णयन्ति । परन्तु एतन्मतं अवास्तविकमिति प्रतीयते । कुतः । सर्वासामेव विभक्तीनां वेदे उपलभ्यमानत्वात् । सर्वेषां सुप्प्रत्ययाणां रूपाणि वेदे दृश्यन्ते । तेषां विविधा अर्थाश्चावलोक्यन्ते । अतो वेदे दृश्यमानो विभक्तिविपरिणामः न तस्याः भाषायाः प्राथमिकत्वं वा असंस्कृतत्वं वा सूचयति । कोऽपि अन्यो हेतुः तत्र भवितु मर्हति । मन्मतेतु अध्यात्मिकादि त्रिविधानां विषयाणां मध्ये कस्मिन्नपि एकास्मिन् विषये तेषां उपस्थितानां विभक्तिप्रत्ययानां सार्थकताऽस्तीति ।

पुरुषविपरिणामोऽपि सहेतुक एव दृश्यते । ये तु आधिदैवतविषये प्रार्थनारूपा मंत्राः सन्ति ते प्रायशः आधिभौतिकविषये मानवव्यवहारप्रदर्शका भवंति । यथा "अग्ने नय सुपथा राये अस्मान्" इत्यादिं मंत्रे अग्नेः प्रार्थना वर्तते । आधिदैवतविषये एव केवला एषा प्रार्थना वर्तते सैव भौतिकविषये विदुषां कर्म प्रकटी करोति । एवमेव अन्येभ्यो देवतामंत्रेभ्यः कौटुंबिकसामाजिकराजकीयविषयाणां बोधाः ज्ञातव्याः इति ।

त्रिलिंगव्यवस्थाऽपि अर्थविशेषतामेव प्रदर्शयाति । पुल्लिंगस्त्रीलिंगनपुंसकलिंगभेदेन न मंत्रवर्णितस्य पदार्थस्य भेदो जायते । यथा लौकिक-भाषायां पुल्लिंगेन

ग्रंथशब्देन, नपुंसकेन पुस्तकशब्देन न वस्तुभेदो भवति । लेखः, पत्रिका पत्रं चेति त्रिलिंगभूतैः शब्दैः एक एव पदार्थो लक्ष्यते । एवमेव देवो देवता दैवतं चेति लिंगत्रयेऽपि वर्तमानैःशब्दैःदैवतस्य अभेद एव लक्ष्यते । य उपदेशः पुलिंगभूतैः अग्नीन्द्रादिभिः पुरुषधर्मविषये कृतः स एव अग्नायीन्द्राण्यादिभिः स्त्रीलिंगभूताभिर्देवताभिः स्त्रीधर्मविषये कृतः । एवमेव अन्यत्र अवगंतव्यम् ।

भूतभविष्यदादि कालविषयेऽपि विचारः कर्तव्यः । केचित्तु वदन्ति वेदे सार्वकालिकाः प्रत्ययाः सन्तीति । न ज्ञायते अस्य कथनस्य को हेतुरिति । कथं प्रत्ययाः सार्वकालिका भवितु शक्नुवन्ति । भूतकालदर्शिनः वर्तमानकालदर्शिनः भविष्यत्कालवाचकाश्च प्रत्यया यदि सार्वकालिकाः तर्हि एककाल विधायिभिः प्रत्ययैरेव सर्वं कार्यं भविष्यति । किमर्थं अन्येषां प्रत्ययानां उपयोगः कृतः । शब्दलालित्याय कृत इति तु वक्तुं नैव शक्यते तस्य वेदे अदृश्यमानत्वात् । अतः सार्वकालिकाः प्रत्यया इति मतं चिंत्यम् । वेदे कालवाचिनः प्रत्ययाः पूर्वापर कार्य निदर्शका इत्येव प्रतिभाति । वेद मन्त्रस्याधिभौतिकार्थज्ञान समये तेषां प्रत्ययानां सार्थकता एव प्रतिभाति । यथा—

**इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् ।**
**शविष्ठ वज्रिन्नोजसा पृथिव्या निःशसा**
**अहि मर्चन्ननुस्वराज्यम् ॥ ऋ० ।**

एष मंत्र आधिदैविकार्थप्रधानः । तस्य आधिभौतिकोऽपि स्वराज्यपरोऽर्थो भवति । तत्र ब्रह्मक्षत्रिययोः कर्मणां पूर्वपरत्वं वर्णितम् । स्वराज्यमुद्दिश्य ब्राह्मणेन क्षत्रियेण च यद्यत्कर्म कर्तव्यं तस्य पूर्वपरत्वं अनेनमंत्रेण व्याख्यातं । ब्रह्मा ब्राह्मणः ज्ञानवर्धनं प्रथमं चकार तदनंतरं शविष्ठो बलवान् वज्री क्षत्रियः ओजसा पृथिवीं शासितवान् एतत्सर्वं स्वराज्य मन्वर्चन् क्रियते । इति मंत्राशयः । अत्र ब्राह्मणस्य कर्म भूतकालनिर्देशेन प्रथमं सूच्यते । क्षात्रकर्म च तदनंतरम् इति । पूर्वपरकर्म सूचकाः कालवाचिनः प्रत्यया इति मे प्रतिभाति । तथापि अस्मिन्विषयेऽपि विद्वद्भिर्विमर्शः कर्त्तव्यः ।

अथेदानीं देवताविषयमालोचयामि । इंद्राग्नीवरुणादिदेवता विशेषात् मनुष्यैः कथं स्वकीयधर्मबोधो बोद्धव्यः इति अवश्यं द्रष्टव्यम् । नानाविधानां विषयाणां आभ्यो देवताभ्य एव बोधो भवतीति ब्राह्मणादिग्रंथेभ्यो विज्ञायते ।

वृत्रमिषेण ज्वरचिकित्सा कथं कर्तव्या इति महाभारते शांति पर्वणि २८२ अध्याये वर्तते । वृत्रशब्दः मेघवाचीति यास्को ब्रूते, असुरवाचीति ऐतिहासिका वदंति परंतु अत्र वृत्रशब्दो ज्वरवाचीति कल्पितः तेन च ज्वरचिकित्सावबोधो जातः । यथा मेघरूपो वृत्रः जलसिंचनेनैव विनश्यति एवमेव ज्वररूपोवृत्रः स्वेदप्रस्रावेण विनश्यतीति तत्रावगंतव्यम् । एवमेव वैद्यकादिविषये एताएव देवताः ज्ञानं ददाति ।

**आश्विनौ वै देवानां भिषजौ० ॥**
**तै० सं० । २ । ६ : ३ ॥**

इति वचनानुसारेण अश्विनौ देवता मंत्रेभ्यः । भैषज्य-ज्ञानं भिषग्धर्माश्च ज्ञायंते इति स्पष्टं भवति ।

चातुर्वर्ण्यकर्माण्यपि आभ्य एव देवताभ्य ज्ञायंते । तद्यथा—

ब्राह्मणानां प्राजापत्यं०, क्षत्रियाणामैंद्रं०,
वैश्यानां मारुतं०, शूद्राणां गांधर्वं स्थानं० ॥
मत्स्य० अ० २ । ७ ॥ वायु० अ० ८ । १७४ ॥

इति मत्स्यवायुपुराणवाक्येभ्यः ब्राह्मणक्षत्रियादीनां वर्णानां धर्मावबोधो प्रजापतीन्द्रादीनां देवतानां मंत्रेभ्यो भवतीति लक्ष्यते । तथा च महाभारते—

ऐन्द्रोधर्मः क्षत्रियाणां ब्राह्मणानां तथाग्निकः॥
महा–शांति० अ० १४१ । ६१ ।

इत्युक्तं । तत्र अग्निदेवतामंत्रेभ्यो ब्राह्मणधर्मबोधो भवतीति विशेषः । तथा च

असावादित्य एकविंश उत्तमा प्रतिष्ठा ।
तदैवं क्षत्रं साश्रीस्तदाधिपत्यं तद् ब्रध्नस्य-
विष्टपं तत्प्रजापतेरायतनं तत् स्वाराज्यम् ॥
ऐतरेय–ब्रा० १ । ५ । ३० ॥

अस्मिन्नैतरेयब्राह्मणवचने आदित्यस्य सूर्यस्य वा मंत्रे-भ्यः क्षात्रधर्मस्य, अधिपतिकर्मणां, राजधर्मस्य, स्वराज्य-धर्मस्य च बोधो भवतीति विज्ञायते । तथा च—

देवता इंद्रादयः पतयः सेनादयः पत्न्यः ॥
तैत्तिरीय ब्रा० २ । २ । २ । ६ ॥

इतितैत्तिरीयब्राह्मणवचनेन इंद्रादिदेवतामंत्रेभ्यो राजपुरुषधर्मस्य इंद्राण्यादीनां देवपत्नीनां मंत्रेभ्यः सेनादीनां धर्मस्य ज्ञानं भवति इत्यनुमीयते ।

मारुती वैविट् । तै० सं० २ । ३ । १ ॥

अस्मिन् तैत्तिरीयसंहितावचने मरुन्मंत्रेभ्यः प्रजाधर्मा ज्ञायंते इति सिध्यति । तथा च—

ऋग्भ्यो जातं वैश्यं वर्णमाहुः ॥
यजुर्वेदं क्षत्रियस्याहुर्योनिम् ॥
सामवेदो ब्राह्मणानां प्रसूतिः ।
पूर्वे पूर्वेभ्यो व च एतदाहुः ॥
तै० ब्रा० ३ । १२ । ९ । २ ॥

एतत्तैत्तिरीय ब्राह्मणवचनं अत्रानुसंधेयं । तथा च—

क्षत्रं वा इन्द्राग्नी । विशो विश्वेदेवा ।
यत्र क्षत्रैवमुज्जयति । अन्वाभक्ता वै तत्र
विट् तद्विश्वान्देवानन्वाभजताम् ॥
शत० ब्रा० २ । ४ । ३ । ६ ॥

अनेन वचनेन इंद्राग्नीदेवतामंत्रेभ्यः क्षात्रियधर्मः विश्वेदेवदेवतामंत्रेभ्यो वैश्यधर्मो ज्ञेय इति ध्वन्यते । तथा च-

क्षत्रं वा इंद्रो विशो मरुतः ॥
शत० ब्रा० २। ५। २। २७ ॥

क्षत्रं वा इंद्रो विशो विश्वेदेवाः ॥
शत० ब्रा० ३। ९। ११६ ॥

विशो मरुतः॥ शत० ब्रा० ३। ९। १। १७॥
क्षत्रं वै सोमो विशो ग्रावाणः ॥
शत० ब्रा० ३। ७। ३। ३ ॥

क्षत्रं वै सोमः॥ शत० ब्रा० ५। ३। ५।
शत०। ५। ४। ३। १६ ॥

क्षत्रं वा इंद्रो विशो मरुतः ॥
विशा वै क्षत्रियो बलवान् भवति ॥
शत० ब्रा० ४। ३। ३। ६ ॥

इत्यादि वचनानुसारेण सोमेन्द्रदेवतामंत्रेभ्यः क्षत्रिय धर्मः मरुद्भिश्वेदेवश्चावदेवतामंत्रेभ्यः प्रजाधर्मो ज्ञायते इत्यनुमीयते।

ब्रह्मैव मित्रः क्षत्रं वरुणोऽभिगन्तैव ब्रह्मकर्त्ता क्षत्रियः। शत० ४। १। ४। १ ॥

अनेन वचनेन मित्रदेवतया ब्राह्मणधर्मो वरुणदेवतया क्षात्रधर्मः प्रसिध्यतीति अवगम्यते। तथा च–

इंद्रायाध्यक्षायेति ॥ शत० ३। २। ४ २०॥

इत्यस्मिन्वचने इंद्रदेवताया अध्यक्षस्य धर्माः ज्ञायंते इति सूच्यते। तथा च–

केन राज्ञा केनानीकेन योत्स्याम इति ।
सहाग्निरुवाच मया राज्ञा मयानीकेनेति ॥
शत० ब्रा० २।६।४।२॥

इति वचनेन अग्निदेवतामंत्रेभ्यः राज्ञो धर्माः सेनाया-इतिकर्तव्यानि, सैन्यस्य व्यवहारश्च बोद्धुं शक्य इत्यनुमीयते ।

तथा च-

वृत्रहन् क्षत्रं वा इन्द्रो विशो मरुतः ।
विशावै क्षत्रियो बलवान् भाति ॥
शत० ब्रा० ४।३।३।२० ॥

क्षत्रं हीन्द्रः क्षत्रं राजन्यः ॥
ब्रह्म ब्राह्मणः । शत० ब्रा० ९।१।१।११ ॥

इत्यादिवचनेन ब्रह्म ब्राह्मणस्येत्यादिदेवतामंत्रेभ्यो ब्राह्मणधर्म्मा, मरुदेवतामंत्रेभ्यः क्षत्रियधर्माः इंद्रदेवता-मंत्रेभ्यो राजन्यधर्मा ज्ञातव्याइति सिध्यति । तथा च—

क्षत्रं वै यमो विशः पितरः ॥
शत० ब्रा० ७।१।१।४॥

इत्यस्मिन्वचने यमदेवता क्षात्रधर्मं पितरो देवताः प्रजा-धर्मं ज्ञापयन्तीति दृश्यते ।

क्षत्रं वै वैश्वानरो विण्मारुताः क्षत्रं तद्वशं करोति ॥ शत० ८।२।३।१३॥

इत्यस्मिन्वाक्ये वैश्वानरदेवता राजन्यधर्मं मरुतोदेवताः प्रजाधर्मं ज्ञापयन्तीति ध्वन्यते ।

अग्निरेव ब्रह्म इन्द्रः क्षत्रं ॥
शत० १० । २ । ७ । ५ ॥

क्षत्रं यान्येतानि देवता क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो मृत्युरीशान इति
शत० ब्रा० १४ । ३ । २ २३ ॥

इत्यादि वचनेन अग्निदेवतामंत्रेभ्यो ब्राह्मणधर्मःइन्द्र वरुण–सोम–रुद्रपर्जन्येशानमृत्युदेवतामंत्रेभ्यो राजन्यधर्मोऽवगंतव्य इति सूच्यते ।

चतुर्णामपि वर्णानां धर्मस्य ज्ञानेन सर्वं आधिभौतिकधर्मज्ञानं भवति । तत्तु आधिदैविकमंत्रेभ्यः कथं ज्ञातव्यं इत्यस्य विवरणं अत्र ब्राह्मणादि ग्रन्थवचनानुसारेण कृतं ।

वेदमंत्राणां आधिदैविकेनार्थेन पदार्थविद्याया बोधो जायते । आधिभौतिकार्थेन सामाजिकराजकीयविषयाणां ज्ञानं भवति । आध्यात्मिकार्थेन जीवात्मपरमात्मविषयकं ज्ञानं भवति । अस्य त्रिविधस्य ज्ञानस्य लाभादूर्ध्वं न किंचिदपि ज्ञातव्यमवशिष्यते । एतत्त्रिविधं ज्ञानं साकल्येन वेदे बुद्धिपूर्वकवाक्यरचनया प्रदर्शितमस्तीति वेदस्य वेदत्वं प्राचीनैर्ऋषिभिः स्वीकृतं । मयाल्पमतिना न तत्सर्वं अत्र प्रदर्शयितुं शक्यते । मयि तादृशस्य ज्ञानस्य अभावात् । यत्किंचिन्मया ज्ञातं तदत्र भवत्सदृशानां विदुषां पुरस्तात् स्थापितं । तत्र सत्यासत्यनिर्णयो भवद्भिः कर्तव्यः ।

वस्तुतस्तु विषयस्यास्यातिविस्तृतत्वात् एकैकस्य विषयस्य विवरणं आवश्यकं, एकैकस्याः देवतायाः मंत्राणां साकल्येनाध्ययनं कृत्वा तस्योपरि निबंधलेखनं कृतं चेत् तत्सर्वमेव विशेषार्थविबोधकं निश्चयेन भविष्यति । न तथा ममैष निबंध- इति तु अहं जानाम्येव । एतादृशां विस्तृतानिबंधानां लेखनारंभः, इतराणि कार्याणि विहाय शीघ्रमेव कर्तव्य इति प्रार्थयन् विरमामि इतिशम् ॥

# मुक्ति पर निबन्ध।

## (श्रीयुत पं०आर्य्यमुनिजी लिखित)

**विश्वानि देव सवितर्दुरितानि परासुव।**
**यद्भद्रं तन्न आसुव॥**

मान्यवर सभापति तथा सभ्यों की सेवा में प्रार्थना है कि हमारा मुख्य प्रयोजन आर्य्यसिद्धान्तों को पुष्ट करने का है, और आर्य्यसिद्धान्त वह कहलाते हैं जिन को आर्य्यसमाज के प्रवर्त्तक महर्षि श्री स्वामी दयानन्द सरस्वती जी ने सत्यार्थ प्रकाश में स्वमन्तव्यों के नाम से लिखा है, यद्यपि स्वमन्तव्य के नाम से उक्त सिद्धान्तों का सम्बन्ध श्री स्वामी जी के साथ ही होना चाहिये था तथापि जब आ० स० श्री स्वामी जी महाराज को आ० स० का प्रवर्त्तक मानता है तो फिर आ० स० स्वामी जी के प्रकाशित सिद्धान्तों को क्यों न माने, अपितु अवश्य मानना चाहिये, इस लिये उक्त मन्तव्यों का सम्बन्ध प्रत्येक आर्य्य-सामाजिक के साथ है, इसी अभिप्राय से स्वामी जी महाराज ने यह लिखा है कि इन सिद्धान्तों की विशेष व्याख्या मेरे बनाये सत्यार्थ-प्रकाशादि ग्रन्थों में है ।

**और आगे जाकर यह भी लिखा है कि यह** सिद्धान्त भूगोल में सर्वत्र शीघ्र प्रवृत्त हो जावें, इस से स्पष्ट

सिद्ध है कि स्वामी जी उक्त सिद्धान्तों को केवल निजमन्तव्य ही नहीं मानते किन्तु सम्पूर्ण आर्य्यों के लिये मुख्यसिद्धान्त मानते हैं।

जो लोग आर्य्यसमाज के प्लेटफारम पर इस अभिप्राय से आया करते हैं कि जो उन की ऊहापोह से सिद्ध हो वही आर्य्यसिद्धान्तों पर बल पा जाय, उन को अपने मन में विचारना चाहिये कि आर्य्यसमाजी कहां तक इस बात को मानने के लिये तैयार हैं, मेरे विचार में जिन सिद्धान्तों की टक्कर आर्य्यमन्तव्यों के साथ लगती है उन को समाजी मानने के लिये कदापि तैयार नहीं।

कारण यह है कि एक तो आर्य्यमन्तव्य ऐसे पक्के हैं कि तर्क द्वारा उन को कोई गिरा नहीं सकता और वेदप्रमाण द्वारा भी इन को कोई हिला नहीं सकता, दूसरी बात यह है कि जिस योग्यता के साथ श्री स्वामी जी महाराज ने उक्त मन्तव्यों का आविर्भाव किया है वह योग्यता अन्य मनुष्यों में नहीं पाई जाती, और तीसरी बात यह है कि वैदिक समय के पश्चात् नाहीं कोई ऐसा अनुभवी पुरुष उत्पन्न हुआ जो आद्योपान्त वेदार्थ का अनुसन्धान कर सके, इस लिये आवश्यक है कि आर्य्यसिद्धान्तों को मुख्य रखकर मैं अपने लेख का उपक्रम करूं।

सभ्यगण! आप को स्मरण रहे कि मेरे लेख का विषय मुक्ति है, मुक्ति क्या पदार्थ है? और [इस को अन्य मतवादी किस २ प्रकार से मानते हैं?] मुक्ति नित्य है वा अनित्य?

कर्मजन्य है वा ज्ञानजन्य ? इत्यादि सब बातें मैं अपने लेख में निरूपण करूंगा, अब प्रथम यह दिखलाता हूं कि मुक्ति का स्वरूप क्या है ।

श्री स्वामी शङ्कराचार्य्य जी के अनुयायी यह कहते हैं कि मुक्ति **अविद्यानिवृत्तिरूप है**, इस विषय में विकल्प यह है कि यदि वह निवृत्ति सद्रूप मानी जाय तो अद्वैत मत का खण्डन होता है, क्योंकि उन के मत में एक ब्रह्म ही सद्रूप है और यदि सत् शब्द के अर्थ व्यावहारिक सत् के लिये जायं तो भी अद्वैतसिद्धान्त में दोष आता है, क्योंकि ब्रह्म-ज्ञान के उत्तर काल में इन के मत में व्यावहारिक सत् का बाध हो जाता है, यदि सत् के अर्थ तुच्छ के लें तो अविद्यानिवृत्ति के लिये पुरुषार्थ करना निष्फल होता है, यदि अविद्यानिवृत्ति को सत् असत् दोनों पदार्थों से विलक्षण अनिर्वचनीय मानें तो दोष यह है कि इस अनिर्वचनीयरूप **प्रपञ्चपङ्क के मिटाने के लिये** अविद्यानिवृत्ति मानी थी और वह पङ्क कलङ्क ज्यों का त्यों बना रहा, क्योंकि अनिर्वचनीयरूप निवृत्ति मुक्ति अवस्था में भी बनी रही, इस अविद्यानिवृत्ति से इन की निवृत्ति कदापि नहीं हो सकती ।

यदि अविद्यानिवृत्ति को ध्वंसस्वरूप मानकर अद्वैत ब्रह्म की सिद्धि की जाय तो ध्वंस सादिरनन्त मानना होगा और इन के मत में सादिरनन्त कोई भी पदार्थ नहीं, क्योंकि जीवेश्वरादि पांच अनादि सान्त और ब्रह्म अनादि अनन्त है फिर ध्वंस सादिरनन्त कौनसा पदार्थ है ? यदि व्यवहार सिद्धि के लिये

ध्वंस को पृथक् पदार्थ भी माना जाय तो फिर ध्वंस से ही द्वैत बना रहा, क्योंकि ध्वंस अनन्त है, इस आशंका के परिहार के लिये इन्होंने ध्वंस को भाव पदार्थ माना है और युक्ति यह दी है कि अभाव भी भाव है, क्योंकि यास्काचार्य्य ने षड्भाव विकार माने हैं और वह यह हैं ( १ ) जायते ( २ ) वर्द्धते ( ३ ) अस्ति ( ४ ) विपरिणमते ( ५ ) अपक्षीयते ( ६ ) नश्यति, इस प्रकार इन्होंने अभाव को भाव माना है, यह इनका तर्क सर्वथा तर्काभास है, क्योंकि यास्काचार्य्य का तात्पर्य्य अभाव को भाव सिद्ध करने में नहीं, किन्तु छः प्रकार के विकार कथन करने में है और "भावस्य विकाराः भावविकाराः" इस अर्थ से प्रध्वंस भाव पदार्थ सिद्ध नहीं होता अपितु भावप्रतियोगिक सिद्ध होता है अर्थात् जहां घट है वहां घट का प्रध्वंस नहीं, यदि इन की तर्क को मुख्य रक्खा जाय तो दोनों एक ही काल में रहने चाहिये पर जन्म के समय "नश्यति" यह व्यवहार नहीं होता और 'नश्यति' के समय 'जायते' यह व्यवहार नहीं होता इस से सिद्ध है कि प्रध्वंस भाव रूप नहीं ।

और जो "विनष्टोघटः" इत्यादि प्रयोगों से अभाव में अतीतकालता सिद्ध कर के इन्होंने यह सिद्ध किया है कि प्रध्वंसाऽभाव भी विनाशी है यह इन का साहस मात्र है, क्योंकि "विनष्टोघटः" यहां घट की सत्ता को ले कर अतीतकाल का प्रयोग है प्रध्वंसाऽभाव में अतीतकाल के अभिप्राय से नहीं ।

और जो **'ध्वंसस्य नित्यत्वादात्मरूपत्वाच्च नाऽनित्यत्वप्रसङ्गः'**=ध्वंस के नित्य होने और अधिष्ठानरूप होने

से मुक्ति में अनित्यत्व का दोष नहीं आता, इत्यादि लेख जो इन्होंने मुक्ति को नित्य सिद्ध करने के लिये लिखे हैं वह भी कदलीस्तम्भवत् उपरितः ससारत्वेन विचारारमणीय हैं वह इस प्रकार कि यदि अविद्यानिवृत्तिरूप ध्वंस को नित्य मान कर मुक्ति को नित्य माना जाय तो ध्वंस के नित्य होने से इन के मत में द्वैत बना रहा, यदि ध्वंस को अधिष्ठानरूप माना जाय तो सादिध्वंस अनादि अधिष्ठान का रूप कैसे हो सकता है? यदि अधिष्ठान को ज्ञातरूपत्वेन सादि मान कर सादिरनन्त ध्वंस की अधिष्ठानरूपता सिद्ध करें तो भी ठीक नहीं, क्योंकि इन के मत में ज्ञातत्वधर्म मुक्तिकाल में चेतन में नहीं रहता, इस लिये अधिष्ठान के साथ सादिरनन्तध्वंस का अभेद नहीं हो सकता ।

और बात यह है कि कल्पित की अधिष्ठान के साथ एकता सिद्ध करने के लिये इनके पास सर्वोपरि युक्ति यहहै कि="**कल्पितस्याधिष्ठानधर्मवत्वमभेदान्नत्वधिष्ठानस्य कल्पितकार्य्यधर्म्मवत्वम्, तस्य कार्य्यात् पृथक् सत्वात्**" कार्य्य से भिन्न अधिष्ठान सत् है इस लिये कल्पित कार्य्य अधिष्ठानरूप है और अधिष्ठान कार्य्यरूप इस लिये नहीं कहा जासकता कि कल्पित कार्य्य की उस से पृथक् सत्ता नहीं, यहां यह अंश विवेचनीय है कि पृथक् सत्ता से इन का क्या तात्पर्य्य है? यदि उत्पत्तिनाशशून्यत्व से इन का तात्पर्य्य है तो अत्यन्ताभाव इन के मत में उत्पत्ति, नाश से रहित है फिर उस की अधिष्ठान से भिन्न सत्ता क्यों न मानीजाय? यदि यह उत्तर दें कि मायावाद के सिद्धान्त में अत्यन्ताभाव अधिष्ठान से भिन्न कोई वस्तु नहीं तो प्रष्टव्य यह है कि अत्यन्ताभाव की निवृत्ति भावरूप है? किंवा अभावरूपा है? किं

रूपा है? यदि भावरूप मानी जाय तो निवृत्यभाव हुआ, यदि अभावरूप मानी जाय तो किस अभावरूप है। प्रध्वंसाभावरूप इस लिये नहीं मानी जासकती कि प्रध्वंसाऽभाव अनन्त है इस लिये निवृत्ति का अभाव हुआ और अत्यन्ताऽभावरूप इस लिये नहीं बन सकती कि अत्यन्ताऽभाव के बने रहने से ब्रह्म और अत्यन्त्याऽभाव दो पदार्थ बने रहे, यदि अत्यन्ताऽभाव को अधिष्ठानरूप सिद्ध करने के लिये उस का भी अभाव माना जाय तो वह अत्यन्ताऽभाव अभावप्रतियोगिक मानना पड़ेगा, इस लिये अत्यन्ताऽभाव ब्रह्मरूप नहीं हो सकता, इस में युक्ति यह है कि अत्यन्ताऽभाव निषेध मुख प्रतीति का विषय है और ब्रह्म विधि मुख प्रतीति का विषय है. इस लिये दोनों का ऐक्य कदापि नहीं हो सकता।

सार यह है कि अविद्यानिवृत्ति अभावात्मक होने से मुक्ति नहीं कही जासकती, क्योंकि यदि उस को ध्वंसरूप मानें तो भी अविद्या निवृत्ति से द्वैतापत्ति ज्यों की त्यों बनी रही, यदि **प्रध्वंस को क्षणिक मान कर** अत्यन्ताऽभावरूप मानी जाय तो यह दोष है कि **अत्यन्ताभावाभाव,** भावात्मक नहीं किन्तु अभावात्मक है, इत्यादि दोषों से दूषित समझ कर स्वा० शङ्कराचार्य्य जी ने मुक्ति का लक्षण केवल अविद्यानिवृत्ति नहीं किया किन्तु यह किया है कि **"अविद्याकल्पितसंसारित्वनिवृत्तिः, नित्यमुक्तात्मस्वरूपसमर्पणश्च मोक्षः"**=अविद्या से कल्पित जो संसारित्व उस की निवृत्ति और नित्य मुक्त ब्रह्म की आत्मत्वेन प्राप्ति का नाम "मुक्ति" है।

यहां विचारणीय यह है कि नित्य मुक्त आत्मस्वरूप-समर्पण क्या है ? " समर्प्यतेऽनेनेति समर्पणम् " यदि यह अर्थ किया जाय तो मुक्ति एक साधन सिद्ध होती है फिर साध्य कोई और मानना चाहिये, यदि यह कहा जाय कि समर्पण शब्द के अर्थ भाव में ल्युट करने से यहां नित्यप्राप्त की प्राप्ति के हैं ? इसका उत्तर यह है कि यह अर्थ मोक्ष तथा मुक्ति शब्द से लाभ नहीं होता, क्योंकि "मोक्ष्यतेऽनेनेति मोक्षः" अथवा "मुच्यतेऽसाविति मोक्षः" इन दोनों व्युत्पत्तियों से मोक्ष के अर्थ मुक्ति के साधन अथवा जो दुःखों से छूट गया हो उस के हैं नित्यप्राप्त की प्राप्ति के नहीं, एवं मुक्ति के अर्थ भी नित्य प्राप्त की प्राप्ति के नहीं होसकते क्योंकि यदि करण में क्तिन् प्रत्यय किया जाय तो "**मुच्यतेऽनया इति मुक्तिः**" यह अर्थ लाभ होते हैं यदि भाव में क्तिन् किया जाय तो "**मोचनं मुक्तिः**" यह अर्थ लाभ होते हैं, सार यह है कि मोचन रूप क्रिया मुक्तिपदार्थ बनता है अथवा मुक्ति के साधनों का नाम मुक्ति ठहरता है पर नित्यप्राप्त की प्राप्ति मुक्ति पद से कदापि नहीं निकल सकती और नाहीं नित्य-प्राप्त की प्राप्ति मुक्ति कहला सकती है **क्योंकि मुक्ति पुरुषार्थ है और नित्य प्राप्त की** प्राप्ति पुरुषार्थ नहीं, क्योंकि इस के लिये किसी साधन की आवश्यकता नहीं ।

**यदि यह उत्तर दिया जाय कि अविद्यारूप तिरोधान की निवृत्ति के लिये साधनसम्पत्ति की आवश्यकता है ?** तो इन का यह कथन इस लिये ठीक नहीं कि प्रकाशस्वरूप ब्रह्म का अविद्या से तिरोधान

नहीं हो सकता, क्योंकि तिरोधान के अर्थ प्रकाश को उत्पन्न न होने देना अथवा विद्यमान प्रकाश को मिटा देना यह दोनों ही हो सकते हैं, पर उक्त अर्थों में दोष यह है कि दोनों प्रकार से स्वरूपनाश ही प्राप्त होता है, क्योंकि प्रकाश को मिटा देना स्वतः प्रकाश का नाश है और प्रकाश को उत्पन्न न होने देना स्वतः प्रकाश के स्वतस्त्व का नाश है। इस प्रकार तिरोधान अनुपपत्ति द्वारा भी नित्यप्राप्त की प्राप्ति नहीं बन सकती, सार यह है कि इन के मत में मुक्ति दूरादेव तत्त्व प्रतीत होती है पर अति सान्निहित रीति से समीक्षा करने से कदलीस्तम्भ के समान विदीर्णभाव को प्राप्त होजाती है और इस बात को यह स्वयं भी समझते हैं, इसी लिये इन के आचार्यों ने यह लिखा है कि—

**"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता"॥**

न किसी की प्रलयादि और न उत्पत्ति है और न कोई मुक्त है वास्तव में यही तत्त्व है, सत्य है समीक्षा करने से अद्वैतवाद का कोई सिद्धान्त भी नहीं ठहर सकता, इस लिये यह तत्त्व मानना ही पड़ता है,अस्तु, इस से सिद्ध यह हुआ कि अद्वैत मत में अविद्यानिवृत्ति, नित्यप्राप्त की प्राप्ति और—

**"अविद्याकल्पितसंसारित्वनिवृत्तिर्नित्यमुक्तात्मस्वरूपसमर्पणञ्च मोक्षः"।**

इत्यादि कोई लक्षण भी मुक्ति का नहीं बन सकता, कारण

यह है कि कः मुक्तः ? केन मुक्तः ? कस्मिन् मुक्तः ? यह कथन भेदवाद में ही बन सकता है अद्वैतवाद में नहीं ।

अद्वैतवादियों की मुक्ति के अनन्तर अब हम विशिष्टाद्वैतवादियों की मुक्ति की समीक्षा करते हैं विशिष्टाद्वैतवादी श्री भाष्याचार्य्य रामानुज का यह मत है कि मुक्ति एक प्रकार का आविर्भाव है, इस विषय में इन का यह लेख है—

**"ज्ञानानन्दादिगुणानां कर्मणात्मनि संकुचितानां परं ज्योतिरूपसम्पद्य कर्मरूपबन्धक्षये विकाशरूपाविर्भावो मोक्षः"** ।

पूर्वकृत कर्मोंद्वारा जो जीवात्मा के ज्ञान तथा आनन्दादि गुण ढक जाते हैं और उक्त कर्म रूप बन्धन के क्षय हो जाने पर जो फिर पूर्वस्वरूप का आविर्भाव है उस का नाम मोक्ष है। इसमें प्रथम दोष यह है कि केवल स्वरूपाविर्भाव का नाम मोक्ष माना जाय तो उस में पुरुषार्थ नहीं रहता, क्योंकि पुरुषार्थत्व साध्यवस्तु में होता है सिद्ध वस्तु में नहीं, यद्यपि अविद्यानिवृत्तिमात्र इन के मत में भी साध्य बन सकता है तथापि अविद्यानिवृत्तिमात्र को मुक्ति मान कर उक्त उत्तर बन सकता है न कि आविर्भाव को साध्य मान कर, क्योंकि जीव के आनन्दादि गुण इनके मत में स्वरूपभूत हैं इस लिये नित्य सिद्ध हैं फिर मुक्ति की स्वरूपोत्पत्ति में साधन सम्पत्ति कैसे ? और दोष यह है कि इन के मत में भी मुक्ति से पुनरावृत्ति नहीं होती अर्थात् मुक्ति नित्य है और साध्य वस्तु कभी नित्य नहीं हो सकती, इस लिये इन का मुक्ति को नित्य मानना ठीक नहीं। और जो इन्होंने जीव में आनन्दादि गुण माने हैं वह भी ठीक

नहीं, क्योंकि उक्त गुण परमात्मा के हैं जीवात्मा के नहीं। कई एक यह कहते हैं कि मुक्ति ब्रह्मानन्दोपभोग है, अर्थात् मुक्ति अवस्था में जीव सदा के लिये ब्रह्मानन्द का उपभोग करता रहता है, यह मत इस लिये ठीक नहीं कि–

"सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।
स्वर्ग एव भवेदेष पर्य्यायेण क्षयी च सः"॥

यदि सुख का उपभोगरूप ही मुक्ति मानी जाय तो स्वर्ग और मुक्ति में क्या भेद रहा? यदि यह कहा जाय कि सुख अनित्य है और ब्रह्म के आनन्द का उपभोग नित्य है, यह भेद है तो उत्तर यह है कि भोग के क्या अर्थ? "भुज्यतेऽसाविति भोगः" अथवा "भोजनं भोगः"? यदि प्रथम पक्ष मानाजाय तो भोगरूप क्रिया के निवृत्त होने पर वह भोग नित्य न रहेगा, दूसरे पक्ष में भोगरूप क्रिया का नाम भोग है तो फिर क्या मुक्ति क्रियात्मक है? यह भी स्मरण रहे कि उक्त भोगवादी के मत में जो मुक्ति अवस्था में ब्रह्मानन्द का भोक्ता जीव को कथन किया गया है यह अंश आर्य्यसिद्धान्त में भी उपादेय है, पर भेद इसी अंश में है कि ब्रह्मानन्दोपभोगरूप मुक्ति नित्य कैसे? क्योंकि "न हि कारणवत्किञ्चिदक्षयित्वेन गम्यते। तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते" कारण वाली कोई वस्तु अक्षयी नहीं हो सकती। यदि दुःखाभावात्मक अंश से मुक्ति की नित्यता सिद्ध करें तो इस से इस लिये छुटकारा नहीं कि वह मुक्ति का स्वरूप नहीं और

न उस में कोई पुरुषार्थत्व है और नाहीं ऐसी मुक्ति भोगवादी को स्वीकृत है फिर कर्मजन्य भोग नित्य कैसे ?

यह अटल सिद्धान्त है कि यदि मुक्ति को अभावरूप माना जाय तभी मुक्ति नित्य हो सकती है अन्यथा कदापि नहीं, इसी अभिप्राय से एक स्थल में कुमारिल भट्टाचार्य्य मुक्ति की नित्यता मानने वालों को इस युक्ति से ललकारते हैं कि–

**"न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।
नच क्रियायाः कस्याश्चिदभावः फलमिष्यते"**

अभावात्मकता को छोड़ कर अन्य कोई भी कारण मुक्ति को नित्य सिद्ध नहीं कर सकता, और अभाव किसी क्रिया का फल नहीं। कुमारिल भट्टाचार्य्य की इस युक्ति से भयभीत हो कर मायावादियों ने अविद्याकल्पित संसारित्व की निवृत्ति को मोक्ष माना है जो हम विस्तारपूर्वक प्रथम खण्डन कर आये हैं कि अत्यन्ताभावाभाव ब्रह्मरूप नहीं हो सकता किन्तु अत्यन्ताभावाभाव अत्यन्ताभावरूप ही हो सकता है, यह विचार पूर्व भली भांति किया गया है इस लिये विस्तार की आवश्यकता नहीं।

विकाशरूप आविर्भाव को मोक्ष मानने वाला विशिष्टाद्वैतवादी भी मोक्ष को नित्य मानता है पर यह स्मरण रहे कि विशिष्टाद्वैतवादी की यह युक्ति उन के मत का स्पष्ट खण्डन करती है कि जब एक २ कर के सब जीव मुक्त हो जायंगे तो फिर संसार की रचना कैसे होगी ? इस प्रश्न को उठाकर विशिष्टाद्वैतवादी स्वयं इस का यह उत्तर देते हैं कि जीव अनन्त हैं

उन का एक २ कर के मुक्त होने से सब का अन्त नहीं होता, फिर स्वयं यह प्रश्न किया है कि देश तथा काल की अनन्तता हो सकती है, क्योंकि न काल का आदि अन्त मिलता है और न दिशाओं का; पर संख्या तो अज्ञान के कारण अनन्त समझी जाती है, जैसा कि " जो वस्तु एक ग्रामीण के ज्ञान में अनन्त है उस को एक नागरिक गिन लेता है, जिस को साधारण नागरिक नहीं गिन सकता उस को गणितज्ञाता सुगमता से गिन सकता है, फिर सर्वज्ञ परमात्मा जीवों की संख्या नहीं जानता इस की क्या कथा" ? इस प्रश्न का कोई समीचीन उत्तर न देकर विशिष्टाद्वैतवादी ने मोक्ष को नित्य माना है। अस्तु।

आश्चर्य की बात यह है कि आचार्य के एकदेशी भोगवादी भी मुक्ति को नित्य मानते हैं। उन का यह कथन है कि सारे मुक्त पुरुषों की मुक्ति से पुनरावृत्ति नहीं होती किन्तु जिन को ईश्वर इस योग्य समझता है कि यह संसार में जाकर उपकार का काम करें उन की ईश्वर की इच्छामात्र से पुनरावृत्ति हो जाती है। अर्थात् ऐसे दश पांच पुरुष मुक्ति से लौटते हैं, अन्य सब सदा के लिये मुक्त रहते हैं और जो मुक्त पुरुष परमात्मा की आज्ञा से यहां आकर परमात्मा का दिया हुआ अधिकार पूरा करते हैं उन के किए हुए कर्म इन के मत में उन को नहीं लगते, यह बात सर्वथा युक्ति विरुद्ध है। केवल पौराणिक इस बात को मान सकते हैं कि अवतार स्वकर्मों के फलों के भोक्ता नहीं होते। पर आर्य्यसिद्धान्त के अनुसार

प्रत्येक मनुष्य को कर्मों का फल भोगना पड़ता है, वह ऋषि हो अथवा ब्रह्मर्षि हो इस विषय में सब समान हैं ।

बड़ा भारी दोष इस मत में यह है कि ईश्वर की इच्छा जीव के पूर्वकृत कर्मों से बिना नहीं होती क्योंकि यदि ऐसा हो कि बिना ही कर्मों के ईश्वर जिस को चाहे उस को बद्ध बनाए और जिस को चाहे उस को मुक्त बनाए तो महा अनर्थ हो जायगा और इस अनर्थ की आर्य्यसिद्धान्त में जगह नहीं, इस लिए इस विषय में एक विद्वान् ने यह लिखा है कि:—

**ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम् ।**
**ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना ॥**

यदि ईश्वर की इच्छा मात्र ही कारण माना जाय तो फिर ईश्वर की इच्छा के वशीभूत होकर सब कुछ हो जायगा फिर कर्मों की कल्पना का क्या फल ? इत्यादि अनन्त दोष हैं जो विस्तार के भय से नहीं लिखे जाते ।

हमारे विचार में यह सिद्धान्त उसी भय से भरा हुआ है जिस भय से भयभीत होकर स्वामी शङ्कराचार्य्य जी तथा स्वामी रामानुज ने मुक्ति को नित्य माना है, वह यह कि यदि मुक्ति को नित्य न मानेंगे तो लोग यह कहेंगे कि मुक्ति तो एक प्रकार की छुट्टी हुई जिस की समाप्ति होने पर जीव फिर संसार-रूपी दफ्तर में आ जुटता है ।

हमारे विचार में यह भय निरर्थक है, क्योंकि इस भय से

किस दृढ़ पुरुष ने स्वकर्तव्य को त्यागा है, लोक में सहस्रों दृष्टान्त विद्यमान हैं जो सान्त कार्य्यों के साधक हैं, क्या राजा राज्यशासन इस भय से छोड़ देता है कि मैं सदा के लिये राजा नहीं रह सकता ? क्या ब्रह्मचारी इस भय से वेदाध्ययन छोड़ देता है कि मैं सदा के लिये वेदाध्ययन नहीं कर सकता ? एवं सहस्रों कार्य्य हैं जिन को अन्त वाले समझकर भी ज्ञानी अज्ञानी सब करते हैं ।

यदि यह कहा जाय कि मुक्ति एक अलौकिक पदार्थ है वह अनित्य कैसे ? सत्य है आर्य्यसिद्धान्त भी मुक्ति को अलौकिक पदार्थ मानता है पर क्या अलौकिक होना मुक्ति की नित्यता को सिद्ध करता है ? यदि ऐसा होता तो मुक्त का ऐश्वर्य्य जो सब मोक्षवादियों के मत में अलौकिक है उस को अनित्य क्यों मानते हैं ? उस को नित्य कोई नहीं मानता । स्वामी शङ्कराचार्य्य जी के मत में वह ऐश्वर्य्य हिरण्यगर्भ के लोक में जाकर प्राप्त होता है जिस को ब्रह्मलोक का ऐश्वर्य्य कहते हैं इसी का नाम इन के मत में क्रममुक्ति है और यह ऐश्वर्य्य नित्य नहीं, क्योंकि इस ऐश्वर्य्य वाले मुक्त पुरुष ब्रह्मा के साथ ही लौट आते हैं, जैसा कि :—

**"कार्य्यात्यये तदध्यक्षेण सहातः परमभि-धानात्"** ब्र० सू० ४।३।१० के भाष्य में स्वामी शङ्कराचार्य्य जी ने स्वीकार किया है कि ब्रह्मलोक निवासियों की मुक्ति नित्य नहीं, केवल इतना भेद किया है कि वहां के निवासी यहां तत्त्व-ज्ञान को पाकर ब्रह्मा जी के साथ कैवल्य मुक्ति को पाते हैं, यह भेद भी अपुनरावृत्ति को सिद्ध नहीं करता, क्योंकि :—

**ते ब्रह्मलोकेषु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे ॥**

यह मुण्डक वाक्य इन के सिद्धान्त को काट देता है, जिस के अर्थ यह हैं कि वह मुक्त पुरुष ब्रह्मलोक में परान्तकाल तक रहकर फिर लौट आते हैं, फिर इस के यह अर्थ कैसे हो सकते हैं कि ब्रह्मलोक में ही तत्त्वज्ञान लाभ कर फिर नहीं लौटते, क्योंकि परिमुच्यन्ति के अर्थ स्पष्टतया छोड़ देने के हैं न कि अनपुरावृत्ति के, इन अर्थों में गड़बड़ा कर कई एक मायावादी इस के यह अर्थ करते हैं कि परामृत जो अव्याकृत प्रकृति उस में विदेहलयतारूप मुक्ति को पाकर फिर मुक्त होते हैं। कई एक इस के यह अर्थ करते हैं कि वह वहां ही संन्यासद्वारा ब्रह्मज्ञान को पाकर मुक्त हुए २ फिर मुक्त होते हैं और कई एक लोकान्तरवादी यह अर्थ करते हैं कि वह सारे मरने के समय ब्रह्मलोक में अमृत को भोगते हुए स्वतन्त्र हो जाते हैं, अधिक क्या पुनरावृत्ति के डर से यहां सब गड़बड़ा जाते हैं, क्योंकि उक्त श्लोक में परामृताः के अर्थ स्पष्ट इस बात को बोधन करते हैं कि मुक्त हुए २ "परिमुच्यन्ति" लौट आते हैं, **हम यहां पर उन वादियों को स्मरण दिलाते हैं जो आर्यधर्मसंस्कर्ता श्री स्वामी दयानन्द सरस्वतीजी के अर्थों पर अश्रद्धा किया करते हैं उन के लिये यहां कौन सा मार्ग है ?** क्योंकि इसी अर्थ के वर्णन में कैवल्योपानिषद् के पाठ में " परामृतात् " पञ्चमी विभक्ति है, जिस के अर्थ मुक्ति से पृथक् होने के हैं फिर 'परिमुच्यन्ति' के अर्थ सदा के लिये मुक्त हो जाने के कैसे हो सकते हैं ? ।

और बात यह है कि मुक्ति से पुनरावृत्ति मानने वालों के धैर्य्य को यह गीतावाक्य सर्वथा छुड़ा देता है कि:—

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन !**

हे अर्जुन ! ब्रह्मलोक तक के सब मुक्त पुरुष पुनरावृत्ति वाले हैं, इस स्थल में मायावादियों को भी अत्यन्त कठिनाई है, कोई कहता है महाप्रलय से प्रथम ब्रह्मलोक से नहीं लौटते, किन्तु महाप्रलय में ब्रह्मलोक की प्रलय हो जाने पर ब्रह्मलोक अवश्य छोड़ना पड़ता है । कोई कहता है कि:—

**एतेन प्रतिपद्यमाना इमं**
**मानवमावर्त्तं नावर्त्तन्ते ॥**

इस देवयान मार्ग से ब्रह्मलोक को प्राप्त हुए मानव इस मनु के आवर्त में नहीं आते, इस से स्पष्ट सिद्ध है कि मानवान्तर में आवृत्ति अवश्य होती है, इस प्रकार उक्त गीतावाक्य ही सिद्ध करता है कि ब्रह्मलोक से पुनरावृत्ति अवश्य होती है ।

ब्रह्मलोक के अर्थ किसी के मत में हिरण्यगर्भ लोक के हैं, किसी के मत में किसी स्थान विशेष के हैं, किसी के मत में जहां जाकर जीव स्वतन्त्र हो जाता है उस स्थान विशेष के हैं, किसी के मत में वह इतना ऊंचा लोक है कि प्रथम पुरुष चन्द्रलोक में प्राप्त होता है फिर विद्युत् लोक में और फिर उस को एक अमानव पुरुष मिलता है जो ब्रह्मलोक के यात्रियों को ब्रह्मलोक में पहुंचा देता है ।

आर्य सिद्धान्त में ब्रह्मलोक कोई लोक विशेष नहीं किन्तु मुक्ति का नाम ब्रह्मलोक है, जैसा कि:—

**तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति** ॥ प्रश्न० १ । १६

में वर्णन किया है कि उन्हीं के लिये ब्रह्मलोक है जिन में कपट छलादिक नहीं, यहां ब्रह्मलोक के अर्थ किसी लोक विशेष के नहीं, और—

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दान्ति, तेषामेवैष ब्रह्मलोकस्तेषा ँ सर्वेषु लोकेषु कामचारो भवति** ॥ छां० ८।४।३

इस में वर्णन किया है कि जो ब्रह्मचर्य्य द्वारा उस को ढूंढते हैं उन्हीं को इस ब्रह्मलोक की प्राप्ति होती है और वह सर्वत्र स्वेच्छाचारी होजाते हैं, इस से भी स्पष्ट सिद्ध है कि ब्रह्मलोक कोई लोक विशेष नहीं, किन्तु मुक्ति का नाम है। और वृहदा० । ४ । ४ । ८ में यह कथन किया है कि:—

**ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ।**
ब्रह्मवेत्ता लोग मुक्त होकर इस पद को प्राप्त होते हैं ।

सार यह है कि ब्रह्मलोक उस अवस्था विशेष का नाम है कि जिस को प्राप्त होकर जीव जहां चाहे विचर सकता है, **आर्य्य सिद्धान्त में इस का नाम मुक्ति है** और इस के अनन्त ऐश्वर्य्यों की प्राप्ति उपनिषदों में विस्तार से वर्णन की है जिस को हम विस्तार के भय से नहीं लिखते ।

अवैदिक लोगों ने मुक्त पुरुष के ऐश्वर्य्य को ऐसा निन्दित बना दिया है कि कोई कहता है कि उस लोक में मुक्त पुरुष के दर्शन करने के लिये अप्सरायें आती हैं और विजरा नदी से पार होकर वह वृद्धावस्था से रहित हो जाता है और फिर नानाप्रकार के सांसारिक सुख भोगता है, इस की सङ्गति न समझ कर कोई इस को क्रममुक्ति कहता है, कोई लोक विशेष ब्रह्मलोक की प्राप्ति कहता है, कोई मुक्ति से प्रथम अवस्था कहता है, इत्यादि, यह पक्ष इस लिये मानने योग्य नहीं कि यदि इस ऐश्वर्य्य में सांसारिक भोग हैं तो जीव मुक्त होते समय इन को क्यों भोगता है ? क्या जीवन्मुक्त का यही लक्ष्य होता है ?

हमारे विचार में यह सामर्थ्य जीव को मुक्ति अवस्था में लाभ होता है कि वह यथेच्छाचारी होता है पर उस को उक्त भोगों की आवश्यकता नहीं होती ।

उक्त ऐश्वर्य्यरूप मुक्ति का आर्य्यसिद्धान्त में स्वरूपलक्षण यह है कि:—

**सत्यसङ्कल्पादिगुणसाम्यं मोक्षः ॥**

ईश्वर के समान सत्यसङ्कल्पादि गुणों के लाभ करने का नाम मोक्ष है और इसी आशय को श्री स्वामी जी महाराज ने सत्यार्थप्रकाश के सप्तम समुल्लास में यों लिखा है कि **"जो जीव परमेश्वर के गुण कर्म स्वभाव के अनुकूल अपने गुण कर्म स्वभाव करता है वही साधर्म्य से ब्रह्म के साथ एकता कह सकता है"** इसी का

नाम सत्यसङ्कल्पादि गुणों की प्राप्ति है, इस विषय में वेद तथा उपनिषदों के अनेक प्रमाण हैं जैसा कि—

**यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।**
**एवं मुनेर्विजानत आत्मा भवति गोतम" ॥**

क० ४ । १९

जिस प्रकार शुद्ध जल में डाला हुआ जल शुद्ध हो जाता है एवं मुक्त पुरुष का आत्मा परमात्मवत् सत्यसङ्कल्पादिकों से परमात्मा के समान निष्पाप हो जाता है । इसी अभिप्राय से उपनिषद् कार ने कथन किया है कि **"तादृगेव भवति"** और इसी भाव को "तन्मे मनः शिवसंकल्पमस्तु" इत्यादि अनेक वेदप्रतीकों में वर्णन किया है, यहां विस्तार के भय से दिङ्मात्र दिखलाया गयां है। इसी को स्वामी जी महाराज ने मुक्त पुरुष का ऐश्वर्य्य वर्णन किया है अर्थात् सत्यसङ्कल्पादिकों के लाभ करने का नाम मुक्ति है, इसी ऐश्वर्य को:—

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः** ब्र० सू० ४।४।५

इस सूत्र में महर्षि व्यास ने इस प्रकार वर्णन किया है कि मुक्तपुरुष ब्रह्म के सदृश सत्यकामादि गुणों को लाभ करके ऐश्वर्य को प्राप्त होता है ।

कई लोग इस के यह भी अर्थ करते हैं कि यहां ब्रह्म के अर्थ जीव के हैं, पर यह अर्थ यहां इस लिये ठीक नहीं कि यदि ब्रह्म के अर्थ यहां जीव के ही माने जांय तो एक तो प्रसिद्धि का अतिक्रमण और दूसरे आविर्भाव रूप मोक्ष में जो

दोष पूर्व दिये गये हैं वह सब आते हैं। इस लिये यह अर्थ ठीक नहीं, अस्तु, प्रकृत यह है कि **सत्यसङ्कल्पादि ऐश्वर्य का नाम मुक्ति है और यह ऐश्वर्य साधनजन्य होने से अनित्य है**, उक्त मुक्ति के साधन यह हैं:-

धर्माचरण, श्रवण, मनन, निदिध्यासन और आत्मज्ञान इत्यादि अनेक हैं। जिन से जन्य होने के कारण मुक्ति आर्य-सिद्धान्त में पुरुषार्थ है और इसी हेतु से अनित्य है ।

अब रही यह बात कि यदि मुक्ति से पुनरावृत्ति होती है तो " **अनावृत्तिशब्दात् अनावृत्तिशब्दात्** " ब्र० सू० ४ । ४ । २२ " **न च पुनरावर्त्तते** " छांदो० इत्यादि वाक्यों का क्या उत्तर है ? इन का उत्तर यह है कि "**मानवमावर्त्तं नावर्त्तन्ते**" छां० ४ । १९ इस वाक्य के अनुसार इस संसृतिचक्र में अर्थात् इन चौदह मन्वन्तरों के आवर्तरूप इस जगत् स्थिति में वह फिर वापिस नहीं आते किन्तु परान्तकाल के अनन्तर ही वापिस आते हैं, इस अभिप्राय से यहां पुनरावृत्ति का निषेध है ।

और बात यह है कि यदि दुर्जनपरितोषन्याय से हम क्षणभर के लिये इन्हीं का सिद्धान्त अवलम्बन करके उत्तर दें तो उत्तर यह है कि यह अनावृत्ति चन्द्रलोक की आवृत्ति के मुकाबले पर है, अर्थात् जिस प्रकार चन्द्रलोक की प्राप्ति वाले पुनरावृत्ति को प्राप्त होते हैं, इस प्रकार ब्रह्मलोक की प्राप्ति वाले पुनरावृत्ति को नहीं प्राप्त होते अर्थात् ब्रह्मलोक वाले ब्रह्मलोक के प्रलय के अनन्तर पुनरावृत्ति को प्राप्त होते हैं और

चन्द्रलोक वाले पहले ही लौट आते हैं, इस प्रकार इन के सिद्धान्तानुसार भी उक्त छां० वाक्य तथा ब्र० सू० उक्त मुक्ति को नित्य सिद्ध नहीं करते ।

वास्तव में उक्त वाक्यों का भाव यह है कि परान्तकाल से प्रथम मुक्त जीव पुनरावृत्ति को प्राप्त नहीं होते ।

इस प्रकार समीक्षा करने से यह सिद्ध होता है कि मुक्ति नित्य नहीं । मुक्ति की अनित्यता में वेद प्रमाण यह है कि:—

**कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम । को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥** ऋ० १ । २ । १३

अर्थ—नूनं=निश्चय करके मुक्त पुरुषों में से जो मैं हूं वह किस देव के पवित्र नाम का अभ्यास करूं कि जो मुझ को फिर मातृभूमि में भेज कर पिता माता के दर्शन कराये ? यह मन्त्र स्पष्टरूप से मुक्ति से पुनरावृत्ति को सिद्ध करता है, क्योंकि यहां मुक्त पुरुष ने " अमृतानाम् " इस षष्ठयन्त पद से अपने आप को निर्धारित किया है जिस से यह स्पष्ट सिद्ध है कि यह प्रार्थना मुक्त पुरुष की है, क्योंकि यदि " अमृतानाम् " पद से देवों में से कोई एक देवविशेष अभिप्रेत होता तो "कतमस्य" इस पद में " जाति परिप्रश्न " में डतमच् प्रत्यय का क्या अभिप्राय होता ? अर्थात् जब 'कतमस्य' इस शब्द से देव निर्धारित हो चुका तो फिर अमृतानां यह षष्ठी देवताओं में से किसी एक देव विशेष के निर्धारण करने के लिये व्यर्थ है ।

इस विवेचना से यह स्पष्ट सिद्ध है कि यह मुक्त पुरुष की प्रार्थना है। जो लोग उक्त विषय में यह आशङ्का करते हैं कि इस सूक्त में बद्ध पुरुष की प्रार्थना कथन की गई है और मुक्त पुरुष बद्ध नहीं हो सकता ? इस का उत्तर यह है कि बद्ध से तात्पर्य्य यहां कर्मों के वासना रूपी बन्धन से है किसी अन्य बन्धनविशेष से नहीं ।

जो लोग यहां कर्मों को छोड़कर अन्य किसी बन्धन विशेष को मानते हैं उन को यह कथा अवश्य माननी पड़ेगी कि शुनःशेप लड़के के माता पिता ने उक्त लड़का थोड़े से रुपये के लोभ से ऐक्ष्वाक राजर्षि को बेच दिया और उसने उस को यज्ञ के स्तम्भ के साथ बांधकर अपने रोग के प्रायश्चित्त के लिये मारना चाहा, उस समय शुनःशेप ने यह प्रार्थना की कि मुझे कौन सा देवता छुड़ा सकता है, इत्यादि मन घड़ित गपोड़ों के अभिप्राय से यदि वेद को लगाना हो तो यहां यूप से बांधे हुए पुरुष की प्रार्थना मानी जा सकती है। पर यह आशय इस मंत्र का कदापि नहीं किन्तु यह आशय है कि मुक्तपुरुष यहां परमात्मा से प्रार्थना करता है कि मैं फिर जन्म पाऊं और इस प्रार्थना का कारण उस के पूर्वकृत कर्मों का आविर्भाव है और वह आर्यसिद्धान्त में इस प्रकार है कि:—

**तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ।**
**उत्तरप्रचयासत्त्वाद् देहोनोत्पद्यते पुनः ॥**

जब मुक्ति के साधनों से मुक्त पुरुष मुक्ति के योग्य हो जाता है, भोग से प्रारब्ध क्षय होजाते हैं, और अन्य कर्म अभी

फल देने के लिये अभिमुख नहीं हुए उस अवस्था में मुक्ति होती है, इस बात को आर्यसिद्धान्त में इस प्रकार स्पष्ट किया है कि ऋषियों को जो वेद का अधिकार मिला वह पूर्वकृत कर्मों के अनुसार मिला अन्यथा नहीं, क्योंकि परमात्मा न्यायशील है ।

उक्त मन्त्र में जिस देव की प्रार्थना की गई है वह परमात्मा देव है उसी के वरुण, मित्र, अर्यमा, बृहस्पति और विष्णु आदि अनेक नाम हैं और उसके सत् चित् आनन्दस्वरूप तथा सत्यकाम सत्यसङ्कल्पादि अनन्त गुण हैं जिस के तत्त्वज्ञान से जीव की सत्यसङ्कल्पादि साम्य रूप मुक्ति होती है, इसी देव का वर्णन इस सूक्त में विस्तार पूर्वक है अन्य किसी जड़देव तथा जलों के राजा वरुण विशेष का नहीं, इस की विशेष समीक्षा करने से मुख्य मुक्ति विषय श्रोताओं की बुद्धि से अति दूर पड़ जायगा इस लिये हम इस विषय को यहीं समाप्त करते हैं—

———

# संस्कृतसाहित्यविमर्शः

( ब्र० हरिश्चन्द्र लिखितः )

सभापते, आचार्य, श्रीमन्तः सभ्याश्च !

अद्यत्वे संज्ञाविशेषाऽभावात् "संस्कृतसाहित्य" नाम्नैव व्यपदिश्यमानं सकलमप्यस्मदीयं प्राचीनं सुरगिरां साहित्यं यदि स्थूलदृष्ट्याप्यालोच्येत, तर्ह्यपि तद् द्विधा विभक्तं प्रतीयते। प्रथमो हि भागः श्रीमतो वेदानुपक्रम्य, आबौद्ध-धर्मोदयं समुत्पन्नं सकलमपि सुरगिरां साहित्यं निजकुक्षौ प्रवेशयति; स हि प्राच्यैः प्रतीच्यैश्चार्वाचीनैर्विचक्षणै "वैदिक-साहित्य" संज्ञया व्यवह्रियते। उत्तरस्तु बौद्धधर्मोदयादनन्तर-मद्य यावत्संजातं सकलमपि साहित्यं स्वीयतामापादयति; तस्य चेतिहासकुशलैर्विद्वद्भिः "संस्कृतसाहित्य"नाम्ना व्यपदेशः क्रियते। तच्चरममेव "संस्कृतसाहित्य" नाम्नाभि-धीयमानमार्य्यसाहित्यं भवत्सम्मुखमद्य किञ्चिदालोचयितु-मीहे। के हि चरमसाहित्यस्य (संस्कृतसाहित्यस्य) विशेषा गुणाः? कैर्विशेषैः संस्कृतसाहित्यं वैदिकसाहित्याद्-भिद्यते? कदा तत् साहित्यमंकुरितमभूत्? कदा कथं च तदु-दयगिरिमारुरोह? कथं तद्ह्रासीत्? काऽद्यत्वे दशा संस्कृतसाहित्यस्य संस्कृतगिरश्च? का च तस्य तस्याश्च भाविनी दशा? इत्यादयः सर्वेऽपि विषया मया भवत्सम्मुखं पठिष्यमाणेऽद्यतने निबन्धे संक्षेपेण समालोचयितुमिष्यन्ते।

नाहं न जाने यत् सान्द्रतिमिरावृतोऽयमध्वा, योऽद्य मया गन्तुमभिलष्यते । विविधगर्तपरीतेऽस्मिन् पथि कृतपरिश्रमा अपि विद्वांसो बिभ्यति स्वच्छन्दसञ्चारात्, तत्कोऽहमकृतपरिश्रमः क्षुद्रविद्यश्च तत्र पर्य्यटितुम् । न मयि तादृशं साहितीवैदुष्यमेवास्ति, येनाऽहं काञ्चिदभिनवां कल्पनां कर्तुम्प्रभवेयम्; नाऽपि भगवत्या वाग्देव्यैवाऽहं दयादृगन्तैस्सम्भावितोऽस्मि, येन पारिषद्यानां मनोरञ्जनमेव विधातुम्पारयेयम्; तदिदं सर्वथा मम बालचापलमेव यद् भवादृशानां कृतिनां पुरतो निबन्धश्रावणं नाम । न जात्वहं विवादबहुले कण्टकाकीर्णे, विद्वद्भिरपि सावधानं संचरणीयेऽस्मिन् साहसपथि कदापि प्रावर्त्स्यम्, यदि भवदीया बालानुग्राहिता न मामुदसाहयिष्यत्, न वा यदि विषयगाम्भीर्यं मामम्मुखरयिष्यत् । आशासे च क्षंस्यन्ते मम स्खलितानि, सहिष्यन्ते मदीयं चापलं, दास्यन्ति च दयालवमभिलाषुकाय मह्यं हस्तावलम्बं तत्रभवन्तः सर्वेऽपि धीमन्तः पारिषद्याः । तदिदं प्रास्ताविकं वचनमिहैव परित्यज्य विषयमनुसरामः ।

बौद्धधर्मोदयात्प्राक्, देवगिरि वर्त्तमानं साहित्यं "वैदिकसाहित्य" नाम्ना, तदुत्तरं च तस्यामेव, तन्नाम्ना व्यवह्रियमाणायां वाण्यां वा विद्यमानं साहित्यं "संस्कृतसाहित्य" नाम्ना व्यपदिश्यते विद्वद्भिः, तेषामेव सरणिमनुसरता मयाऽप्यस्मिन् निबन्धे व्यपदेक्ष्यते, इति प्रागेव प्रत्यपीपदम् । तत्, "को ह्यनयोस्साहित्ययोर्भेदः" ? "को हि चरमसमयोत्पन्ने साहित्ये विशेषः, यो ह्यवच्छिनत्ति तद्वैदिकसाहित्या-"

दित्येष प्रश्नः सर्वतः प्रागस्माभिरालोचनीयो भवति। सत्स्वपि नैकेषु परस्तात्प्रदर्शयिष्यमाणेषु भेदेषु, भाषाभेद एव तयोर्मुख्यतमो भेदो नः प्रतिभाति। स्थूलदृष्ट्याऽप्यालोच्यमानेऽयं भेदः स्पष्टमेव प्रतीयते। या हि भाषा कालिदासादिभिः कविभिर्निजकाव्येषु प्रयुक्ता, यस्यां वा भाषायां पतञ्जलिवात्स्यायनादिभिर्निजभाष्याणि भाषितानि; सा वेदेषूपलभ्यमानाया उपनिषत्सु वा दृश्यमानाया भाषायाः(सत्यप्यल्पीयसि साम्ये) भिद्यत एव। पुरा वैदिककाले प्रयुज्यमाना बहवो धातवः संस्कृतकाले सर्वथैव विलोपमवाप्तवन्तः; पुराऽनियमेन प्रयुज्यमाना लकारास्तदुत्तरकाले नियतिं यातवन्त इत्यादि स्पष्टमेव पाणिनिपतञ्जल्यादिदर्शनादवगम्यते। अतएव च पाणिनिः स्वीये व्याकरणे लोकवेदयोर्भेदं पश्यन्, तयोर्भेदेनैव शब्दनियमाँश्चकार, सूत्रयामास च "बहुलं छन्दसी-" त्यादि सूत्राणि। एवमेव वैदिककाले प्रयुज्यमाना बहवश्शब्दा उत्तरकालेऽर्थवैपरीत्यमवापुः, इत्येतदपि निरुक्तालोचनया स्फुटीभवति, न तत्र बहु वक्तव्यमस्ति। तस्मादुभयोरपि साहित्ययोरयं सर्वैः स्फुटमवलोक्यमानो भाषाभेदो मुख्यतमो विशेष इति बहुलं विवादमन्तरैव निर्णयकोटिमधिरूढं मन्ये, त्यक्त्वा चैनं विषयमग्रतो व्रजामः।

एवं भाषाभेदेन भिद्यमानस्य वैदिकसाहित्यात् संस्कृतसाहित्यस्य को जन्मकालः? कस्मिन् काले वा नवीनेयं भाषा वैदिकभाषातो भेदमवाप्य भिन्नपदवाच्यतां जगाम? इति द्वितीयः प्रश्नोऽस्माभिरिदानीमुत्तरणीयोऽस्ति। नायं सूत्तरः प्रश्नः,

यतो न भाषा उत्पद्यमाना दृश्यन्ते, परं विकसन्त्य एव समुपलभ्यन्त । क्रमशो विकसन्त्यो भाषाः, अतीते बहौ काले भेदमवाप्नुवन्ति, नैकस्मिन्निर्णीते क्षणेऽहनि वा । अतएव वैदिकग्रन्थेषु तदुत्तरग्रन्थेषु च प्रयुज्यमानयोर्भाषयोरस्त्येव साम्यम् । तथाप्ययं प्रभेदः पाणिनेरनन्तरं स्फुटमेव जातः प्रतिभाति । पाणिनेः पूर्वमनियमेन सर्वेष्वार्य्यावर्तीयेषु जनेषु प्रवर्तमानेयं भाषा महता परिश्रमेण पाणिनिना निजं व्याकरणं निर्माय नियतिं स्थिरतां चापादिता, तत एव कालात्तेन संस्कृतत्त्वाच्च "संस्कृत"पदव्यवहार्यतामियायेति पूर्वापरप्रमाणपर्यालोचनया कल्प्यते । पाणिनिश्च वैक्रमाब्दारम्भाच्छतकत्रयं शतकचतुष्टयं वा पूर्वमभूदिति निरचायि कालकलाकुशलैर्वैदेशिकैर्विद्वद्भिः । तस्मात् वैक्रमाब्दारम्भाच्छतकत्रयं पूर्वमेव नवसंस्कृतसाहित्यारम्भकालोप्यऽस्तीति स्फुटमेवायाति ।

एवं, यद्यपि पाणिनेरनन्तरमेव नवसाहित्यारम्भो जायते, तथापि वैक्रमाब्दस्य चतुर्थशतकावधि नास्माभिः कश्चिदपि प्रसिद्धः काव्यग्रन्थः समुपलभ्यते । हेतुरप्यत्र स्पष्ट एव । वैक्रमाब्दात् पञ्चशतसमाः पूर्वमेव तात्कालिकं "ब्राह्मणधर्म" विध्वस्य भगवता बुद्धेन स्वीयो बौद्धधर्मः प्राचारि, व्यधायि च विनाशः तात्कालिकस्य दुराचारस्य । "ब्राह्मणधर्मेण" साकं संस्कृतसाहित्यं संस्कृतभाषा चाऽपि क्षीणतामेव जगाम । एवं हि प्रतीयते, यद् बुद्धकाले विद्वत्सु ब्राह्मणेष्वेवेयं संस्कृतभाषा लब्धप्रचाराऽऽसीत्, इतरे तु जनाः

संस्कृतभाषातिरिक्तां कांचिदपरामेव भाषां बभाषिरे, या हि प्राकृतजनैरुच्यमानेति वा, प्रकृतिभूतेति वा, प्रकृतेरुत्पन्नेति वा प्राकृतसंज्ञां लेभे, यैव मागधीति पालीति संज्ञया वाऽभिख्यायते प्राचीनैः पण्डितैः । प्राकृतजनैरुच्यमानत्वात्सुखेनावबुध्यमानत्वाच्च, तयैव वाण्या बुद्धो निजधर्मम्, आपामरजनं प्रचिचारयिषुर्जनानुपदिदेश । बौद्धधर्मप्रसारेण सार्द्धं सैव भाषा विद्वज्जनादरणीयतामलब्ध, तस्यामेव च भाषायां बौद्धा विद्वांसो निजग्रन्थानलेखिषुः । एवं प्राकृतभाषायामुदयमानायां प्रतिदिनमपाचैषीत्संस्कृतसाहित्ये विदुषां रति रितरजनानां च तत्रादरः । केचिद् ब्राह्मणाः स्वधर्मस्नेहवशादध्यगीषतेमां भाषां, अध्यापयांचक्रुश्च निजशिष्यान् । महाभाष्यदर्शनादवगम्यते यन्नेयं भाषा बौद्धधर्मोदयकालेऽपि सर्वथैव विलोपमवाप, परन्तु नाऽत्र सन्देहो यदियं भाषा तस्मिन् काले गौणभावमेवापेदे । ततस्तत्कालीनसंस्कृतपुस्तकानामभावो नास्माकं विस्मयमुत्पादयितुमर्हति । प्रातःस्मरणीयेन प्रियदर्शिनाऽशोकेन, वैक्रमाब्दारम्भात्पूर्वं जातैरपरैश्च बौद्धैर्नृपैर्लेखिताः शिलालेखाः संस्कृतातिरिक्तयैव गिरा निबद्धाः समुपलभ्यन्ते, तेनाप्यवसीयते यत्तस्मिन् काले संस्कृतातिरिक्तैव काचिद् भाषा प्रधानभावमभजत ।

भगवता बुद्धेन प्रवर्तितस्य बौद्धधर्मस्यायं प्रसारः शतकपञ्चकं यावदजायत, तत ऊर्ध्वं तु बौद्धधर्मः प्रतिदिनं ह्रासमवाप । व्यलुप्यत् सा पवित्रता बौद्धधर्मस्य;

पारस्परिकेण कलहेन विकलतामापाद्यन्त सर्वेऽपि संघाः; अपूर्यन्त विहारा भोजनमात्रपरैर्भिक्षुकैः; भगवदुपदेशस्य विस्मृत्य प्रतिमार्चनमारभ्यत बुद्धानुयायिभिः; इत्येवं प्रतिदिनं क्षयमवाप बौद्धधर्मः। बौद्धानां महायानशाखायामुदितायां सत्यां व्यनश्यदेव बौद्धधर्मः। क्षयं याति च बौद्धधर्मे पुनरप्युदयमगाद् "ब्राह्मणधर्मः", तेनैव च सार्द्धं संस्कृतसाहित्यमपि। अशोकः स्वकीयान् शिलालेखान् प्राकृतभाषयैव निबन्धयामासेति मयोर्ध्वमदर्श्यत, असाध्यत च तेन तस्मिन् काले प्राकृतभाषायाः प्राधान्यं गौणभावश्च संस्कृतभाषायाः। परन्तु वैक्रमाब्दस्य द्वितीये शतके जातस्य रुद्रदमनस्य नृपतेः प्रशस्तिः संस्कृतभाषया निबद्धा समुपलभ्यते, तेन संस्कृतभाषायास्तात्कालिकः पुनः प्राधान्यलाभो निर्णीयते। तृतीयचतुर्थशतकयोस्संस्कृतभाषया तादृशं महत्त्वमवाप्तमासीत्, यद् बौद्धधर्ममनुगच्छताऽश्वघोषेण बुद्धचरितं संस्कृतगिरैव निबन्धनीयमभूत्। चतुर्थपञ्चमशतकयोर्बाहुल्येन विलोपं गतवति बौद्धधर्मे, गतसत्त्वाद् बौद्धधर्मेण साकमेव नाशमापत्सु बौद्धभूपेषु, भारतगगने च चकासत्यां गुप्तनृपतिकीर्तिचन्द्रिकायामुदयशिखरमेवारुरोह संस्कृतसाहित्यम्। गुप्तेषु शासत्सु भारतभुवं भूयांसः कवयो भूमिमिमामलमकार्षुः। महानासीदादरो वाग्विलासकुशलेषु विद्वत्सु गुप्तवंशीयानां भूपतीनाम्। गुप्तवंशावतंसस्य समुद्रगुप्तस्य सभां हरिषेणनामा कश्चिन् महान् कविर्भूषयतिस्म। "समुद्रगुप्तः स्वयमपि काव्यनिर्माणनिपुणोऽभूत, निर्मितवाँश्चायं कानिचित्काव्यानि, यानि नाद्यत्वे समुपलभ्यन्ते"

इति चापि हरिषेणलिखितादेव समुद्रगुप्तवृत्तान्तादवसीयते । तत्पुत्रो विक्रमादित्यपदलाञ्छनश्चन्द्रगुप्तो द्वितीयोऽपि कवीनाद्रियते स्म, स्वयञ्चापि वाग्देवीदयापात्रमासीदित्यपि-चेतिहासपाठादवगम्यते । गुप्तानामेव वंशे जाते द्वितीये चन्द्रगुप्ते (३७५ वि० पू०) स्कन्दगुप्ते (४५५ वि० पू०) वा शासति महीं, महीं मण्डयामास जन्मना 'कविकुलगुरुः' कालिदासोऽपीत्यपि साधयितुं प्रायत्यत कैश्चिद् विद्वद्भिः । यो वा को वा भवतु कालिदासकालः, उपरिदर्शिताभिरुपपत्तिभिः स्फुटमेव निश्चीयते यद्वैक्रमाब्दाच्छतकद्वयादनन्तरं बौद्धधर्मो नाशमियाय, उत्कर्षमियाय च पुनरपि संस्कृत साहित्यम् । अयमेव संस्कृतसाहित्यस्य पुनरुज्जीवनकालः कथ्यते विद्वद्भिः; अतएव कालात्संस्कृताभाषा वैदिकभाषातोऽभिद्यत; अतएव कालादारभ्यते वस्तुतो नवसंस्कृतसाहित्येतिहासः; अतः कालादूर्ध्वमेव कालिदासभारविभवभूतिबाणप्रभृतयो-विख्याताः कवयः समजनिषत, न्यबध्नँश्च निजानि काव्यानि । तस्यैव नवसंस्कृतसाहित्यस्यालोचने वयमिदानीं प्रवर्तामहे ।

प्रथमं तावद् वयं बौद्धकाले समुपेक्षितस्य संस्कृतसाहित्यस्य पुनरुज्जीवने यानि कारणान्यभूवन्, तानि समासतः प्रदर्शयितुमिच्छामः । बुद्धात्प्राक् वैदिकीभाषेति नाम्ना प्रसिद्धा-भाषैव व्यवह्रियतेस्म, तस्यामेव धर्मग्रन्था लिख्यन्तेस्म, तयैव च यज्ञादिकृत्यानि सम्पाद्यन्तेस्म । निरुशृङ्खलं वर्धमाना च सा पाणिनिना नियमिता निजव्याकरणबन्धैरिति प्रागेव मया प्रत्यपाद्यत । परन्तु साधारणैर्जनैः प्रयुज्यमाना भाषा न

दृढां स्थिरतामापादयितुं शक्यते, सूक्ष्मैर्व्याकरणबन्धैर्नियमिता वा भाषा न साधारणजनव्यवहार्याऽवतिष्ठते । न हि प्राकृतजना व्याकरणेनादिश्यमानान् नियमान् सर्वदा प्रतिपालयितुं शक्नुवन्ति । विद्वद्भिर्नियमितायां तु निजभाषायामितरे जनास्तां वाणीं परित्यज्य, तत्सुतीभूतां काञ्चिदपरामेव भाषां भाषितुमारभन्ते । पाणिनिनापि कठोरतरं नियमितायां संस्कृतभाषायां प्राकृतजनैः पर्य्यहीयत सा भाषा, तैः परित्यक्ता च विद्वन्मात्रगोचरैव साऽजायत । अतएव बुद्धेन यदा निजधर्मप्रचारः प्रारम्भि, तदा विद्वांसो ब्राह्मणा एवाधीयतेस्म, प्रयुञ्जतेस्म च धर्मकृत्येषु तां भाषाम् । बुद्धेन निजपथमानीतेषु जनेषु राजसु चाश्रयाभावाद् व्यलुप्यदेव संस्कृतभाषा । उपरिप्रदर्शितप्रकारानुसारं चास्तङ्गच्छति बौद्धधर्मे, पुनः प्रभावमनुभवत्सु च ब्राह्मणेषु, संस्कृतसाहित्यमपि पुनरुज्जीवितमभूत् । तात्कालिकस्य पौराणिकधर्मस्य ( ब्राह्मणधर्मस्य ) मूलभूतं वैदिकसाहित्यमेवासीत्, ब्राह्मणैश्च संस्कृतभाषैव धर्मकृत्येषु लौकिकव्यवहारेषु चाद्रियतेस्म, ततः प्रसारमाप्नुवति तेषां धर्मे, संस्कृतभाषोन्नतिरप्यवश्यम्भाविन्येवासीत् । एवं पुनरुज्जीवितं संस्कृतसाहित्यं, विनष्टे बौद्धराज्ये, प्रकर्षमनुभवत्सु च पौराणिकब्राह्मणधर्मानुगेषु गुप्तभूपतिषु तैर्दत्तकरावलम्ब मभ्युदयशिखरमारुरोह ।

इत्थं संस्कृतसाहित्यस्य पुनरुद्गतेः कारणकलापमालोच्य तद्गतान् गुणान् दोषांश्च विवेचयितुं प्रयतिष्यामहे । सौकर्याय च सकलमपि नवीनं संस्कृतसाहित्यं—"उदय-

कालीनं संस्कृतसाहित्यं" "क्षयकालीनं संस्कृतसाहित्य" मित्येवं द्विधा विभज्य समालोचनां विधास्यामः । चतुर्थशतकादष्टम-शतकान्तमुदयमानमभूत्संस्कृतसाहित्यम्, अतएव "उदय-कालीनं संस्कृतसाहित्य" मभिधीयते तदस्माभिः । ततोऽद्या-वधि क्षयप्रवणत्वात् तत् साहित्यं क्षयकालीनमिति संज्ञायते ।

प्रवर्तितायामुदयकालीनस्य साहित्यस्य समालोचनायां प्रथमं तावद्रघुवंशाद्यनेककाव्यनाटकप्रणेता "कविकुलगुरुः" कालिदास एवाऽस्माकं दृष्टिपथमुपसर्पति । बाल्मीकिव्यासयो-रार्षकाव्ये विहाय, ततः पूर्वं जातस्य न कस्यापि विदितस्य कवेः किञ्चित् काव्यजातमुपलभ्यते । श्रूयते हि हरिषेणनामा कश्चित्कविः, यो महनीयकीर्तेः समुद्रगुप्तस्य सभामलमकार्षीत्, यत्कृतानि च समुद्रगुप्तप्रशास्तिपद्यान्युपलभ्यन्ते शिलाया-मुल्लिखितानि, यानि चाऽनुमापयन्त्येतदीयां विचित्रां कविता-शक्तिम् । परन्तु नाद्यापि तेन कृतं किमपि लघुकाव्यं महा-काव्यं वा समवाप्यत । लज्जास्पदं शोकास्पदं चैतद्यन्नाद्यापि निर्णेतुं पारितो भूमण्डलमण्डनस्य कालिदासस्य कवेर्जीवन-कालो विद्वद्भिः । सन्त्येव तत्समयमधिकृत्य भूयांसि ऐतिह्य-शास्त्रकुशलानां मतानि । तन्मतिमतामपि मोहके कण्टका-कीर्णेऽस्मिन् पथि नाहं प्रवर्तितुमुत्सहे । एतावदेव विनिवेद्य कृतकृत्यं मन्येऽहमात्मानं यदयं कालिदासः, पञ्चमशतकादौ गुप्तवंशीयेषु भूपेष्वधितिष्ठत्सु भारतभूमिं, तेषामेवान्यतमस्य

[१] "बुद्धचरित" कर्त्ताऽश्वघोषः कालिदासात्प्राचीनोऽर्वाचीनो-वेत्यद्यापि विवादास्पदमेव ।

सभामनुजग्राह। विख्यातान्येवास्य कवे रघुवंशकुमारसम्भवादीनि लोकोत्तराणि काव्यानि, आद्रियत एव तत्कृतं शाकुन्तलं स्वदेश इव विदेशेऽपि काव्यकलारसिकैः कोविदैः, स्वीक्रियत एवास्य कविमूर्द्धन्यता प्राचीनैरर्वाचीनैश्च साहितीनिपुणैर्विचक्षणैः, तन्नास्ति मम तत्र बहुवक्तव्यापेक्षा । माधुर्ये, लालित्ये, प्रकृतिसौन्दर्योपवर्णने, चरिताख्याने, प्रतिभायां, बहुज्ञतायां न कोऽपि तं जेतुमपारयदद्यावधि कश्चिदप्येतद्देशोद्भवः कविः।

विष्णुशर्मापि तस्मिन्नेव शतके स्वकीयं भुवनविख्यातमद्भुतं पञ्चतन्त्राभिधं कथाग्रन्थमग्रथ्नात् । तदनन्तरे षष्ठे शतके तु दण्डिशूद्रकावेव विख्यातौ कवी समभूताम् । दण्डी प्रथममेव गद्यकाव्यमलेखीदित्ययमाद्रियते विद्वद्भिः । परन्तु नैतेन कृताः कथा मनोरञ्जकतामावहन्ति, नापि तदीया निबन्धनरीतिरेव प्रशस्यतां भजते। सप्तमशतकं तु विदितनामधेयैर्महाकविभिरलमक्रियत निजजन्मग्रहणेन । तथाहि, विजितनिखिलभारतमंडले हर्षमहाराजे शासति भुवं, तस्यैव राज्ञः परिषदमलङ्कुर्वाणो बाणः काव्यानि कानिचिच्चकार यान्यद्यापि बुधास्वाद्यतामुपयान्ति। हर्षचरितवर्णनपरं "हर्षचरित-" नामकमयमैतिहासिकं गद्यकाव्यं व्यरचयत्, यत्साहाय्येन तात्कालिकं प्रभूतं वृत्तजातं निर्धार्यते विद्वद्भिः। "कादम्बरी-" नाम्नाऽभिधीयमानामपरामप्ययं सुप्रसिद्धां गद्यकथामलेखीत्, या हि सर्वातिशायि गद्यकाव्यमनुमन्यते साहितीज्ञैः । श्लेषेषु, ललितपदप्रयोगे, कथानिबन्धने चायमतीव कुशलोऽभवत्कविः। एतदीयान् गद्यदोषांस्तु यथास्थानमालोचयिष्यामः । भट्टि-

काव्यकर्ता भट्टिनामाऽपरोऽपि कविः तस्मिन्नेवशतके प्रादुरासीत् । आसीदयं वैय्याकरणः, व्याकरणपरिचयायैव चायं-मकार्षीन्निजकाव्यमिति शास्त्रकाव्यत्वाद् दूरत एवपरित्यज्यतेऽस्माभिस्तत्काव्यम् । तस्मिन्नेव शतके भारविणा भर्तृहरिणा च निजकाव्यानि निरमायिषत । अर्थगम्भीरां, विस्फुरद्वाग्मितामसरां, गूढतत्त्वां को न वेद भारवेर्भणितिम् । कालिदासकाव्यमपहाय, भारवेः किरातार्जुनीयं सर्वाण्यप्यपराणि काव्यान्यातिशेते । भारवेरर्वाचीनाः कवयस्तत्कृतिमेवानुकृत्य स्ववाक्प्रसारं चक्रुः, तेन च स्फुटमेव भारवेमर्हत्त्वमाविर्भवति ।

अष्टमे शतके तु संस्कृतसाहित्याभिमानपात्रं श्रीकण्ठपदलाञ्छनं सुगृहीतनामा भवभूतिः सरस्वत्युत्सङ्गमङ्गीचकार। कोहि नाम तादृशः काव्यकलारसिको यो न जानाति करुणारसपरीपाकरमणीयां भवभूतेर्भारतीम् । करुणरसपरीता भवभूतेर्गिरो निशम्य "अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्" । करुणरसविकासे, अद्भुतरसोल्लासे, वीररसविलासे च कालिदासोऽपि गलज्ज्योतिरिवोपलक्ष्यते भवभूतेस्समक्षम् । प्रत्यङ्गं प्रविश्य, ललितानि दृश्यानि वर्णयितुं कविकुलगुरुरतीव नो निपुणः प्रतिभाति, परन्तु विस्मयकराणां विपिनादिप्रकृतिदृश्यानामेकीभूतमद्भुतं प्रभावमाविर्भावयितुं भवभूतिरेव प्रभवति । द्रष्टुमभिलष्यते चेदियं शक्तिः, अधीयतामुत्तररामचरितेऽस्य कृतं दण्डकारण्यवर्णनम्, मालतीमाधवे वा कृतानि विविधानि श्मशानवनगिर्यादिवर्णनानि । बाल्य-

सहकृतवीररसास्वादाय तु सुमन्त्रलवयोस्संवाद एव नेत्र-पात्रीक्रियताम् । नाटककृतावपि भवभूतिः कालिदाससमकक्ष एव प्रतिभाति नः । समकक्षो भवतु मा वा भवतु, निस्संशयं कालिदासो भवभूतिश्च द्वावप्येतौ कर्त्री न केवलं संस्कृत-साहित्यरत्नतामेव वहतः, परं जगत्कविमूर्द्धन्येष्वन्यतमावेताविति द्रढीयान्नो विश्वासः। भवभूतिमेवान्तिमं कविं मन्येहं संस्कृतसा-हित्यस्य, एतेन साकमेव सुरगिरां यौवनमवसानमगात्, अत-उत्तरं प्रतिक्षणं क्षीणतामभजत साहित्यकला काव्यकौशलञ्च । अस्ति यः कश्चिदुत्कर्षः संस्कतसाहित्ये, विद्यते यत्किञ्चिदपि माधुर्यं, नव्यत्वं, मनोहरत्वं, सत्कृतियोग्यं वा वस्तु संस्कृतसाहित्ये तदेतत्कालिकानामेव कवीनां कृतिषु समुपलब्धुं शक्यते । तदिमां साहित्योद्यानयात्रामत्रैव परित्यज्य तात्कालिकानां कवीनां कृतिषु दृश्यमानान् गुणान् दोषाँश्च समासतो निरूप-यितुमिह प्रयतामहे ।

## ( १ ) प्रकृतिवर्णना ।

प्रकृतिवर्णना नाम तावत्प्रथमो गुणः संस्कृतकवीनाम् । काव्येषु, नाटकेषु, गद्यग्रन्थेषु, चम्पूप्रबन्धेषु च बाहुल्येनोप-लभ्यन्ते वनपर्वतादीनां प्राकृतदृश्यानां वर्णनानि । सूर्योद-यास्तंगमनसरोनदीसमुद्रादीनि पौनः पुन्येन वर्णयन्ती संस्कृत-कवीनां रसना न कदापि श्रान्तिमाश्रयति । बलवत्खलु स्निह्यन्ति विविधोद्यानर्तुदृश्येष्वस्माकं प्राचीना अर्वाचीनाश्चापि कवयः । न हि तेभ्यः कृत्रिमाणां नगरभवनादीनां वर्णनं तथा रोचते, यथा विधिविहितानां वनसरःपयोदादीनाम् । अर्वा-

चीनैरलंकारशास्त्रकुशलैस्तु महाकाव्येषु "संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराणां" "प्रातर्मध्यान्हमृगयाशैलर्तुवनसागराणां" चावश्यवर्णनीयत्वम्प्रतिपादितम् । एतान्यवश्यं वर्णनीयानि, एतान्येव वा वर्णनीयानीति नियमो दोषावहो गुणावहो वेति प्रश्नं नाऽत्र वयं समालोचयितुमीहामहे, "एतद्देशप्रसूतान" कवीनां प्राकृतेषु दृश्येषु प्रेमातिशयं तु दर्शयितुमिच्छामः । नाऽत्र किञ्चिदपि नगरादिकृत्रिमं वस्तु वर्णनीयत्वेन नाम्नापि कीर्तितम्, कीर्तितानि तु संध्यासूर्येन्दुरजनीप्रदोषादीनि । इत्थमेव वन्यजानामाम्रपलाशादीनां, स्थलारोहिणामशोकादीनां, उद्यानं भूषयतां नानाकुसुमतरूणां, जलभवानां सरोजादीनां वर्णनानि बहुशः काव्येषु समुपलभ्यन्ते । मृगकोकिलादयो वन्या अवन्याश्च शुकसारसादयोविहगा बहुधा वर्ण्यन्ते कविभिः, तस्मान्निर्विवाद एव भारतभुवां कवीनामादरातिशय एतेषु प्राकृतदृश्येषु । न चैतदस्माकं विस्मयमुत्पादयितुमर्हति । परीतैवास्ति सर्वेयमस्माकं भारतीया भूमिरद्भुतया प्रकृतिशोभया । को नाम नाकृष्यते भारतीयया प्रत्यूषशोभया । कस्य नाम हृदयं न हर्षयति कुसुमाकीर्णा भारतीया वसन्तलक्ष्मीः । कस्य चेतो न प्रभावयन्ति तुषारवेष्टितान्यभ्रंकषाणि हिमाद्रिशिखराणि । पार्वणविधुज्योत्स्नया धवलितां शारदीं निशामवलोक्य कस्य कवेर्नैसर्गिकी प्रतिभा न स्फुरेत्, को वा तां विहाय कृत्रिमां नगरीं वर्णयितुमीहेत । निसर्गत एवास्माकं भारतीया भूमिरलंकृतास्ति विश्वतस्तादृशैश्शोभनैर्दृश्यैः, ततोपि नगरवासाद् ग्रामवासं वनवासमेव वाऽधिकं सत्कुर्वाणास्ते यदि वन्यामेव शोभां, तत्रत्यान्येव च

दृश्यान्यौत्सुक्येन वर्णयन्ति तर्हि, किमत्र चित्रम् ? किं यदि सुखकरं ग्रामवासमपहाय स्वास्थ्यघातको नगरवास इदानीमवलम्बितोऽस्मद्देशोद्भवैर्जनैः ? किं यदि विविधैः कुसुमपारिमलैस्सुरभितानि क्षेत्राण्यवज्ञाय पूतिगन्धीनि पौरभवनान्याश्रितान्यस्माभिः ? किं यदि हारित्यपरीता विमलमारुतपाविताः पर्वतस्थलीस्तिरस्कृत्य, प्राणान्तकधूम्रधूसरिताः पौरवीथीस्सनाथिता अस्माभिः ? किं यदि नास्माकमिदानीं हृदयानि सरसानि ? किं यदि नास्मभ्यं रोचन्ते प्राकृतानि दृश्यानि ? अरोचतैव तेभ्यो ग्रामवासः, अमन्यन्तैव ते धन्यमात्मानं प्राकृतशोभावेक्षणेन, सुरभयामासुरेव ते तत्तन्नैसर्गिकशोभावर्णेन भारतीयां संस्कृतभारतीम्, आसीदेव तेषां हृदयं सरसम्, अभवन्नेव ते जगत्कान्तिप्रणयिनः । प्राकृतदृश्यवर्णनैव मया प्रथमो गुणो मन्यते प्राचीनानां कवीनाम्, यश्च गुणः सकला अपि तेषां कृतीर्व्याप्नुवन्नभिलक्ष्यते । अनेनैव हेतुना वैदेशिकैः पण्डितैरपि दुरवबोधमस्मत्साहित्यम् । न यैर्जनैः कदापि भारतीयानि प्राकृतदृश्यानि प्रत्यक्षीकृतानि, न ते कालिदासादिकृतीनामलौकिकं रसमास्वादयितुमर्हन्ति । अस्मद्भूमेस्तानि तानि चमत्कारकारीणि दृश्यान्यजानन्तो यदि योरोपीया विद्वांसो नाऽस्मत्कविषु किमपि प्रशंसनीयमासादयन्ति, ततो नैतद् विस्मयावहं भवितुमर्हति; स्वीक्रियते चेदं तेषु कैश्चित् स्पष्टमेवेत्यलमतिपल्लवितेन ।

## ( २ ) अलंकारप्रयोगः ।

अयमपरो गुणः संस्कृतकविताया यदस्यां विविधा अथा-

लंकाराः शब्दालंकाराश्च प्रयोक्तुं शक्यन्ते, प्रयुज्यन्ते च कविभिः । आलंकारिकीं गिरमन्तरा न कान्यपि पद्यानि कवितापदभाञ्जि भवितुमर्हन्ति । अयं हि नियमः सर्वास्वेव भाषासु कृतानि काव्यानि व्याप्नोति; अनेनैव च विशेषेण गुणेन काव्यवाणी व्यावहारिकवाणीतो भिद्यते; असाधारणं च कञ्चिदानन्दं जनयति । काव्यगिराऽवश्यमेव व्यावहारिकगिरो भिन्नया भवितव्यमिति साहित्यशास्त्रनिष्णाता विद्वांसो मन्यन्ते । न हि "उदेति सूर्यः" इति वाक्ये प्रयुक्ते सति स एव रसः समुत्पद्यते मनसि, यः खलु "उदयगिरिमधिरोहति कमलिनीकान्तः" इति वाक्ये कर्णातिथीकृते समुद्भवति । हेतुरपि नात्र दुर्लभोऽस्ति । चरमवाक्येन झटित्येव तानि दृश्यान्युपक्षेप्तुं शक्यन्ते, न यानि शक्यन्ते प्रथमेनोपक्षेप्तुम् । प्रथमवाक्येन केवलं सूर्यस्तदुदयनक्रियैव च स्मार्यते, चरमवाक्ये तु श्रुते, बहवः पदार्था युगपदेव स्मृतिपटमधिरोहन्ति । उदयाचलः, ततः सूर्योदयः, ततः कमलिनी, पुनस्तस्याः सूर्यस्य च विकास्यविकासकभावः सम्बन्धः, इत्येवं क्रमेण एकेनैव वाक्येन भूयांसः पदार्था युगपदेव स्मारिताः स्मृतिपटे च चित्रिताः सन्तः किञ्चिन्मानसिकं दृश्यमुद्भाव्य, तत्काले लोचनाभ्यामनुपलभ्यमानमपि तत् प्रत्यक्षमिव प्रतिभासयन्ति, चेतसश्च परां प्रीतिमुपजनयन्ति । इदमेव हि कौशलं महत्त्वं च कवेर्यदयं परोक्षाण्यपि दृश्यानि वृत्तानि च पदप्रयोगैरेव प्रत्यक्षाणीव करोति । यानि च पदानि वाक्यानि वा तमर्थं साधयितुम्प्रभवन्ति, तान्येव काव्योचितानि भवन्ति, नेतराणि । अस्मत्पण्डितसमाजेषु प्रसिद्धेन

निदर्शनेनाप्ययमर्थः प्रतिपादयितुं शक्यते। श्रूयते, पुरा अर्द्धामेव कादम्बरीं विधाय मृत्युशय्यां समधितिष्ठमानो बाणः, 'आत्मजयोः कतरः पुत्रः कविः,यो मया पूरयितुमपारितां कादम्बरीं पूरयेदि'ति ज्ञातुकामः, पुरतः स्थितं पादपमेकं वर्णयितुं तावादिदेश। एक आह—"शुष्को वृक्षस्तिष्ठत्यग्रे", द्वितीयस्तु व्याजहार—"नीरसतरुरिह विलसति पुरतः।" उभाभ्यामपि कृतं वर्णनमाकर्ण्य, द्वितीयपुत्रमेव कविम्मन्यमानः, तस्मै एव अर्द्धावशिष्टां कथामचकथत्, स एव च मृत्युंगते बाणे विच्छिन्नां कथामपूरयत्। कोहि भेद उभाभ्यामपि सुताभ्यां कथितयोर्वाक्ययोः ? केन हेतुना बाणो द्वितीयमेव पुत्रं कविममंस्त, न त्वपरम् ? प्रथमेन पुत्रेण प्रयुक्तानि पदानि नीरसानि, द्वितीयेन तु प्रयुक्तानि सरसानीत्ययमेव भेद इति बहवः पण्डिताः कथयन्ति। परन्तु नैतावानेव भेदोऽदर्शि बाणेन, न चैतावदेवाभिप्रेतमासीद् बाणसुतस्य। मन्यामहे वयं सरसत्वमेतस्य वाक्यस्य, परन्त्वितोऽप्यधिकोऽस्ति कश्चिद्गुण एतद्वाक्यान्तर्गतेषु पदेषु, य एनं विच्छिनत्ति पूर्वस्माद्वाक्यात्। प्रथमं वाक्यं केवलं शुष्कस्य वृक्षस्य पुरतः स्थितिं बोधयति, न हि तत्र कश्चिन्निगूढोऽर्थः परिस्फुरति। परन्तु स एव नरः कविपदवाच्यतां याति, यः खलु परैः साधारण्येन प्रत्यक्षतस्समुपलभ्यमानेष्वपि वस्तुषु निगूढं किञ्चित्तत्त्वं रहस्यं वा पश्यति, दृष्ट्वा च तमर्थं वाक्यैः प्रकाशयति। सत्यमुक्तं केनचिद् वैदेशिकेन कविना यत् "अरविन्दमरविन्दमिति यद्यपि समानमेव कवीनां ग्रामीणानां च, तथापि तस्मिन् दृष्टे कवीनां हृदयेषु ते ते भावाः स्फुरन्ति, यानि न कदापि

ग्रामीणैरवबोद्धुमपि शक्यन्ते" (1)। बाणस्य द्वितीयः पुत्रोऽपि न केवलं प्रत्यक्षं शोषमेव दृष्टवान्, परं तरोरन्तः प्रविश्य तत्र रसाऽभावमपि प्रत्यक्षितवान् । न स केवलं तरोः स्थितिमेव दृष्टवान्, किन्तु तदीयं विलासमप्यन्तर्दृष्ट्याऽवलोकितवान् । येषु वस्तुषु प्राकृता जनाः सत्तामात्रं निश्चिन्वते, तेष्वेव कवीनां हृदयानि अलौकिकान् विलासाननुभवन्ति । यत्र न केनापि जनेन साम्यं दृश्यते, तत्र कवीनामन्तर्लोचनानि केनचित्सह साम्यं पश्यन्ति, केनचित्सह विरोधमवलोकयन्ति । अत एव यत्राऽन्ये जना मूकत्वमाश्रयन्ति, तत्र कविभिरुपमीयते, यत्राऽन्ये मौनमवलम्बन्ते तत्र कविभिरुत्प्रेक्षा विधीयन्ते । अयमेव भेदः कविषु प्राकृतजनेभ्यः ; अयमेव भेदः काव्यभाषायां व्यावहारिकवाणीतः ॥

अहो ! प्राचीनानां कवीनामलङ्कारप्रयोगचातुरीं प्रदर्शयितुकामाः सुदूरमपक्रान्ताः स्म । अतीवगम्भीरो विद्वत्प्रतिपाद्यऽश्चाऽयं विषयो न ह्यस्मिन् निबन्धके मया प्रतिपादयितुं शक्यते; तस्मादिमं विषयमिहैव परित्यज्य प्रकृतमनुसरामः ।

निरूपणीय आसीदलङ्कारप्रयोगो नाम द्वितीयो गुणः संस्कृतकवीनाम् । अलङ्कारयुक्तानां गिरां प्रयोगे कः स्वाभाविको हेतुरिति तु प्रसङ्गात्प्रदर्शयितुम्पायतिषि । अस्मद्देशो-

---

(1) To him (Poet) the meanest flower, that blows, can give thoughts that do often lie too deep for tears.

द्भवाः कवयो विशेषतः स्निह्यन्ति अलङ्कारेषु । उपमोत्प्रेक्षादीनां बाहुल्येन प्रयोगोऽस्मद्देशोद्भवकवीनां कृतिषु दृश्यते । अस्मत्कवीनामलङ्कारेष्वादरातिशयं, साहित्यकलानिरूपकस्य शास्त्रस्य अलङ्कारशास्त्रेतिसंज्ञैव प्रमाणयति । केचित्तु विद्वांसः, अलङ्काराणां भूषणत्वं विस्मृत्य तेषामेव काव्यात्मतां प्रतिपादयामासुः । सा तु भ्रान्तिरेव । रस एवात्मा काव्यस्य, स एव हि वर्णनीयः काव्येन, अलंकारास्तु केवलं तद्वर्णनप्रकारे भेदमापादयन्ति । तस्मात् तावदेव अलंकारा गुणतां भजन्ते यावन्न रसापकर्षं विदधति; रसहानिमापादयत्सु तु तेषु ते परिहातव्या एव भवन्ति ।

अर्थालंकारास्तु प्रायः सर्वास्वेव भाषासु कवयद्भिः कविभिः प्रयुज्यन्ते, परन्तु यमकादयः शब्दालंकाराः प्रायः संस्कृतभाषायामेव दृश्यन्ते । संस्कृतभाषायाः सुमहतः शब्दशेवधेस्साहाय्येन ये ये शब्दालंकाराः संस्कृतकविभिः प्रयोक्तुं शक्यन्ते, न तेषां प्रयोगोऽन्यभाषाभाषिभिः सम्भाव्यते । यद्यपि साहित्यशास्त्रज्ञैरेषां प्रयोगोऽधमत्वेनैव परिगण्यते, तथापि सीमानमनुलंघ्य प्रयुज्यमानाः क्षणावस्थायिनमानन्दं जनयन्त्येव । क्षयकालीनैः कविभिः परमादृतत्वाद् दोषपक्षमाश्रयन्, तेनैव च तेषां काव्यानि नीरसानि गर्हणीयानि चाऽभवन्निति त्वन्यदेतत् ।

### (३) विविधवृत्तानां प्रयोगः ।

विविधानां वृत्तानां प्रयोगादपि संस्कृतकाव्यानि कांचिद् रमणीयतां प्राप्नुवन्ति । एकेनैव वृत्तेन विहितं सरस-

मपि काव्यं न तादृशं सारस्यं वहति, यथा विविधैर्वृत्तैः कृतम्। प्रतिसर्गमेकमेव वृत्तं पठचित्तं खिद्यत एव । यथा व्यञ्जनानां वैविध्यं भोजनास्वादमुत्कर्षति, तथैव विविधानां वृत्तानामुपयोगेनाऽपि काव्यरसो वृद्धिमाप्नोति ।

भूयांसो गुणाः प्रत्येकं कविषूपलभ्यन्ते, परन्तु न ते मयाऽत्र समग्राहिषत। मया त एव गुणा अत्र समगृह्यन्त, ये खलु साधारण्येन संस्कृतकवीनां कृतिषु समुपलभ्यन्ते । नाऽहं मन्ये यत्तत्राऽपि कृतकृत्यतामहमासवानस्मि। कस्याऽपि साहित्यस्य गुणानां विश्लेषणे यादृशं रसिकत्वं वैदुष्यं चापेक्ष्यते न तस्य लेशोऽपि मयि विद्यते। याथार्थ्येन जानाति ममात्मा, यन्नाहमेतत्कर्मयोग्योऽस्मि, जानाम्यहं यदहमेतेनात्मकर्मणा विदुषामुपहास्यतामेव यास्यामि, तथापि प्राचीनकवीनां गुणवर्णनपरेण लघीयसाऽपि प्रयत्नेन कृतार्थयितुमात्मानं तावत् साहसमकार्षम् ।

सत्स्वपि ऊर्ध्वं प्रकटितेषु भूयस्सु गुणेषु, तात्कालिके साहित्ये केचिद् दोषा अपि सन्त्येव ये न केनाऽप्यपन्होतुं शक्यन्ते; तेषामुपर्य्यपि समासत इदानीमस्माभिर्दृष्टिपातः कर्तव्योऽस्ति ।

### (१) भाषायाः कृत्रिमत्वम् ।

भाषायाः कृत्रिमत्वं खलु सुमहान्तं दोषं संस्कृतकाव्यानां मन्यामहे। अधीयन्तां ब्राह्मणग्रन्थानां केचिद् भागाः, पठ्यन्तां वा यथाकथञ्चित्काव्यरीत्याऽपि समुपनिबद्धानामुपनिषदां मध्यगाः केचिद् भागाः, अनुशील्यतां महाभाष्यकर्तुः पतञ्जले-

रेव वा लेखशैली, मया दिदर्शयिषितोऽर्थः स्वयमेव स्फुटीभविष्यति । स्वाभाविकीव तेषां लेखशैली प्रतीयते; यथा यथा तेषां मनसि विचारास्समुत्पद्यन्ते, तथा तथैव तैर्भाषया प्रकाश्यन्ते, न प्रयत्नेन तैस्तत्र कश्चिद् विशेष आधीयते । परं नेयं दशा संस्कृतकाव्येषु प्रयुज्यमानाया भाषाया दृश्यते । यत्नविशेषैस्समस्तपदप्रयोगैश्च कवीनां रीतिः कृत्रिमत्वमिवापन्ना लक्ष्यते । तेन काव्यानां भाषा व्यावहारिकभाषातो नितरां भिद्यते । कवीनां भाषा स्वभावादेव भिद्यते व्यावहारिकभाषात इति मया प्राक् प्रतिपादितम् । परन्नैतदस्माभिर्विस्मर्तव्यं, यत् स्वभावत एव भिन्नायां कवीनां भाषायां प्रलम्बसमस्तपदप्रयोगैर्यदि भूयोऽपि भेद आपाद्येत, तर्हि, अर्थावबोधे क्लेशं जनयन् स भेदो रसस्य व्याघातं करोति । अस्वाभाविकोऽयं प्रकारो यत् कृत्रिमाणां समस्तपदानां प्रयोगो नाम, अतएव तादृशभाषायाः प्रयोगेण न झटित्यर्थः परिस्फुरति चेतसि । झटिति नावबुध्यमाने चाऽर्थे रसहानिर्भवत्येव। स्वयमेव भवद्भिरेतदनुभूयताम्, न तत्र बहु वक्तव्यापेक्षास्ति। को नाम कादम्बर्याः समासबहुलं गद्यं पठन् विशेषं यत्नमन्तरा तदर्थमवबोद्धुं शक्नुयात्, को नाम वा समस्तपदभूयिष्ठानि नैषधादीनां पद्यानि पठन् द्रुतमेव तदर्थानवगत्य रसास्वादं कर्तुं शक्नुयात्, तस्मात् स्पष्टमेव रसानां कृत्रिमत्वं रसव्याघातकत्वञ्च । तेनैव च कारणेन वयं समस्तपदानां भूयसा प्रयोगं निन्दनीयं गर्हणीयं च मन्यामहे ।

## (२) गद्याऽभावः ।

अयमपरः कलङ्कस्संस्कृसाहित्ये, यन्नास्मिन् गद्यग्रन्थाः

समुपलभ्यन्ते ; येऽपि समुपलभ्यन्ते तेऽपि विविधदोषयुक्तत्वाद् दूष्यतामेव भजन्ते । न हि कोऽपि कादम्बरीकारादीनां गद्यलेखनशैलीं प्रशंसितुमर्हति । पद्यप्रबन्धेषु कवीनां वृत्तपारवश्यात् क्षम्येताऽपि समस्तानामप्रसिद्धानां च पदानां प्रयोगः, परन्तु गद्यप्रबन्धे न तादृशं कवीनां पारतन्त्र्यं भवति, तत्रापि प्रविशन्त एते दोषाः कवे रुचिदोषमेव प्रतिपादयन्ति। नाऽह मेतां प्रवृत्तिं बलवत् खल्वदूषयिष्यम्, न चेदियं सीमानमुदलंघयिष्यत्, काव्यानां च सौन्दर्यमपाकरिष्यत् । तात्कालिकानां कवीनां तथा रुचिर्विकृतिमियाय, यथा ते नाटकेष्वपि प्रलम्बानि समस्तपदानि प्रयुञ्जाना न कञ्चिद् दोषमपश्यन् । परन्त्वऽहं मन्ये, यत् समस्तादिपदप्रयोगाय न वयं तात्कालिकान् कवीन् बहुदूषयितुमर्हामः । पाणिनेः पूर्वं स्वच्छन्दप्रचारैव देववाणी बभूव, यथा यथा तु वैय्याकरणैरियं भाषा न्ययम्यत, तथा तथा लौकिकजनहेयतामेवापेदे । लोकैरव्यवह्रियमाणा च विद्वज्जनप्रयोज्यैवेयं समजायत, ततः स्वाभाविकत्वे विनष्टे कृत्रिमत्वागमोऽनिवार्य्य एवाभवत् । अपरमप्येकं कारणमस्याः प्रवृत्तेर्मम प्रतिभाति । प्राचीनकाले लिपेरभावात् सर्वमपि ग्रन्थजातमध्येतृभिः स्मर्तव्यं भवतिस्म । वृद्धिमुपगते च ग्रन्थवारिधौ स्मरणे क्लेशं विज्ञाय, शिष्याणां सौकर्य्याय सूत्रकारैः सूत्राणि निरमायिषत । संक्षेपार्थकेषु सूत्रेषु संक्षेपाय तैः सूत्रकृद्भिः समस्तपदानि प्रायुज्यन्त । मन्येऽहं, ततः कालादेव गद्येऽपि समस्तपदानां बाहुल्येन प्रयोगः प्रवृत्तोऽभवत् । सूत्रेष्वपि समस्तपदानां प्रयोगो दोषावह एव ।

तत्कारणादेव अद्यापि सूत्राणामर्थनिश्चये महान् कलहस्समुत्पद्यते। परन्तु तत्र कथञ्चित् सह्यमानोऽपि काव्येषु, विशेषतो गद्यप्रबन्धेषु नैषोऽनुमोदितुं शक्यते। समासानां भेदेनार्थप्रत्यय एव महान् विवादः समुपतिष्ठते। किं च, यथा प्रलम्बसमस्तपदानां प्रयोगेण, अर्थावगमे विलम्बाद् रसहानिरपि महती सम्भवति, तत्प्रागेव प्रतिपादितम्। किं करिष्यामः संक्षेपेण यदि काव्यस्य जीवितमेव नश्यति? केचित्तु मन्यते यत्, समस्तपदान्यन्तरा संस्कृतभाषाया लालित्यं कार्यक्षमत्वं च न सम्पद्यते। वैदिकीं भाषामालोचयितुं तान् साग्रहं वयं प्रार्थयामः। वैदिक्यां भाषायां न क्वचिदपि वयं समासप्रयोगमवलोकयामः। समासप्रयोगमन्तरापि तेषां भाषा कार्यक्षमाऽऽसीदेव। समासप्रयोगमन्तरापि महाभाष्यकृता स्ववाचि लालित्यं सम्पादितमेव। अहन्तु मन्ये, यतः कालात् समस्तपदानां बाहुल्येन प्रयोगः समारभ्यत कविभिः, ततः कालादेव गद्यप्रभावमेवाऽऽपेदे। तयोः कारणकार्यभावमनभ्युपगच्छतापि समकालवर्त्तित्वमुभयोः स्वीकर्तव्यमेव। नाऽहमभिप्रैमि यत्सर्वथैव समासानां परित्यागो विधेयः, सर्वास्वेव भाषासु समस्तपदानामुपलम्भात्कथं तेऽस्माभिः सर्वथा परिहातुं शक्यन्ते? येषु लघुसमासेषु प्रयुक्तेषु झटित्यर्थावगमो जायते, प्रयोक्तव्या एव ते समासाः, न वयं तान्निन्दामः। परं निन्दामो वयं तान् प्रलम्बसमासान्, ये द्रुतमर्थमनवबोधयन्तो रसाऽपकर्षं जनयन्ति।

एवं मया यौवनकालीनस्य संस्कृतसाहित्यस्य गुणा दोषाश्च यथामति संक्षेपेण समालोच्यन्त। मन्येऽहं, यत्,

सत्यामपि भाषायाः कृत्रिमतायां, सत्स्वपि च क्वचित् क्वचिद् रसापकर्षकेषु शब्दालङ्कारेषु, तात्कालिकमस्मदीयं साहित्यं जगति प्रसिद्धानि साहित्यानि परिस्पर्धितुमर्हति, क्वचित् क्वचिच्च तान्यतिशयितुमपि समर्थयते। तस्मिन्नेव काले ते कवयोऽभूवन्, येषां कारणान् म्लानवदनाऽप्यस्मदीया मातृभूमिर्जगत्यादरपात्रतां याति । भवभूतिरेव गीर्वाण-वाण्या अन्तिमः कविरभवदित्यत्र नास्ति कश्चिदपि संदेहः । न भवभूतेरनन्तरं कश्चिद् यथार्थः कविरभवत्, न तदनन्तरं यथार्था केनचित् कविता समुद्भाविता । नाऽहमभिप्रैमि, यत्, तदनन्तरं केनचित् पद्यान्येव न व्यरच्यन्त, वृत्तान्येव वा नाक्रियन्त; कृतान्येव बहुभिः कविम्मन्यैः पद्यानि, विरचितान्येव प्रचुरैः शाब्दिकैर्वृत्तानि; परन्तु पद्यान्येव वृत्तान्येव वा केवलं न कवितापदभाञ्जि सम्भवितुमर्हन्ति । तथ्यमुक्तं केनापि :—

> कवयः कालिदासाद्याः, कवयो वयमप्यमी ।
> पर्वते परमाणौ च, पदार्थत्वं व्यवस्थितम् ॥

भवभूतेरनन्तरं जातेषु कविषु न काचिद् वास्तविकी प्रतिभा, न किंचिदभिनवत्वं, न वा किञ्चिन्महत्त्वमवलोक्यते । अनुशील्यन्तां भवभूतिकालादनन्तरं कृतानि काव्यानि; तेषु प्राचीनानां कवीनामनुकृतिरेवोपलक्ष्यते । अनुकृतिपरा अपि हि तात्कालिकाः कवयः पुरातनानां कवीनां प्रायो गुणान् विहाय, तेषां दोषानेवाऽनुचक्रुः । पुरातनेषु काव्येषु बीजमात्रेणोपलभ्यमाना दोषाः, अर्वाचीनकाव्यक्षेत्राण्यवाप्य महतीं वृद्धिमासादयन् । प्राचीनैः क्वचित् क्वचि-

देव प्रयुज्यमाना अधमत्वेन मन्यमाना यमकानुप्रासादयः शब्दालंकारास्तात्कालिकैः कविभिः महदाद्रियन्त, प्रायुज्यन्त च निजकाव्येषु । रसानपकर्षकत्वेन क्वचित् क्वचिल्लघीयः प्रयुज्यमानाश्शब्दालंकारा न दोषाय कल्पन्ते, परन्तु किं कुर्याम शब्दालंकारैः, यदि काव्ये काव्यजीवितं रस एव नाऽस्ति ? यमकादिश्रवणेनाऽपि जायमाना प्रीतिर्न रसः, किन्तु रसाभास एव। तात्कालिकाः "हठादाकृष्टानां कतिपयपदानां रचयितारः" कवयो यथार्थां रसवतीं कवितां कर्तुमपारयन्तः, केवलं शब्दाडम्बरेणैवात्मानं धन्यममन्यन्त । तात्कालिकाः कवयः काव्यमिषेण केवलमात्मनश्शब्दप्रयोगचातुरीं श्लेषपाटवं व्याकरणादिवैदुष्यं च प्रकटयितुमभिलषन्ति, न तु तत्काव्याकलनेन मानसिकी रसोद्भूतिर्जायते सहृदयानाम् । शास्त्रकोशादिवैदुष्यमाविष्कर्तुं कृतं काव्यं न कदापि रसमुद्भावयितुमर्हति । अनुशील्यतां किरातार्जुनीये काव्येऽर्जुनेन कृता शिवस्तुतिः, पुनः सावधानमधीयता मुत्प्रेक्षाश्लेषयमकादिभिर्विविधैर्दुरूहैरलंकारैरलंकृताऽपि नैषधकर्त्रा कृता विष्णुस्तुतिः । भारविपद्येषु पठितेषु काचिदलौकिकी भगवद्भक्तिः समुदेति,श्रीहर्षेण कृतानि प्रहेलिकातुल्यानि पद्यानि पठद्भिस्तु न कदापि भक्तिरस आस्वादयितुमपि शक्यते।

यापि तेषु काव्येषु कल्पनोत्प्रेक्षा वाऽभिधीयते कैश्चित्, सापि गर्हणीयैव नः प्रतिभाति । महता यत्नेनोह्यमाना तन्यमाना वोत्प्रेक्षा कमानंन्दं जनयतीति न वयं विद्मः । किञ्च, उत्प्रेक्षा वा भवतु, उपमा वा भवतु, श्लेषो वा भवतु; अपरेऽ-

पीदृशाः परस्सहस्रा अलंकारा वा भवन्तु, यदि तेऽलंकाराः कवितां दुरूहतामापादयन्तो रसमेव लोपयन्ति, किमुपकृतं नस्तैरलंकारैः ? शाब्दा आर्था वा अलंकारा भूषणान्येव, न तु काव्यजीवितामिति न विस्मर्तव्यं कदाचिदपि कविभिः। अत्युक्तिदोषोऽपि तात्कालिकानां कवीनां काव्येषु सीमानमुदलंघयत् । अयमपरः क्षालयितुमशक्यः कलङ्कस्तेषां कवीनां, यत्ते शृङ्गारवर्णनामिषेण मालिन्यं प्रसारयामासुर्भारते वर्षे । जगति शुद्धाया रतेः,धर्मेणाऽनुमोदितस्य स्नेहस्य वा विद्यमानत्वाच्छृङ्गारवर्णनं न दोषाय मन्यामहे, परन्तु यदि कश्चित् जगत्कर्त्रैव जगति प्रवर्तितं शुद्धं पवित्रं च शृङ्गाररसमाविलयन्, तदपदेशेन वैषयिकान् भोगान् वर्णयेत्, अधर्मं वा उपदिशेत्, वयं तदीयं तत्कृत्यं सर्वथा दूषणीयं गर्हणीयं निन्दनीयं च मन्यामहे । उदयकालीनैः कविभिरपि क्वचित् क्वचित् सीमोल्लंघितैव, परन्तु मनसाऽप्यचिन्तनीयानि, वचसाप्यवचनीयानि यादृशान्यश्लीलानि वर्णनानि माघामरुश्रीहर्षादिभिरक्रियन्त, न तल्लवोऽपि प्राचीनकवीनां काव्येषु दृश्यते । शाक्तमतस्य पुराणानामेव वेषमनुभावं मन्यामहे, यदश्लीलादप्यश्लीलतराणि वर्णनानि कुर्वाणाः कवयो न वा लज्जन्ते,न वा सङ्कोचमञ्चन्ति ।

एवं तादृशमभ्युदयमवाप्य दिवं गतवति भवभूतौ, ततऊर्ध्वं म्लायन्ती भगवती वाग्देवी ह्रासमेव जगाम । नाऽहमभिप्रैमि, यद्,भवभूतेरनन्तरं जातानां कवीनां कवितायां सन्त्येव न केचिदपि प्रशंसनीया गुणाः, अस्त्येव माघजगन्नाथादीनां कवीनां काव्येषु बहुत्र रसोल्लासः, परन्तु गुणानपेक्ष्य दोषाणा-

मेव तत्राधिक्यात्, सामस्त्येन गिरां देवी क्षयप्रवणैवासीदिति मया मन्यते । नवमशतकादेव नाशोन्मुखतां भजन्ती संस्कृत-काव्यकला सप्तदशे शतके सर्वथैव व्यलुप्यत् ।

एकोनविंशं शतकं, विस्मयकरमितिहासस्मरणीयं च शतकमुच्यते विद्वद्भिः। तदवितथमेवेति वयं मन्यामहे। अस्मिन्नेव शतके योरोपीयदेशैस्तास्ता लौकिका अभ्युदयाः समवाप्यन्त, न ये मतिं कल्पनामपि वाऽधिरूढास्तत्रत्यानां पूर्वजातानाम् । अस्मिन्नेव शतके नवीनानि शास्त्राणि, अभिनवाः कलाः, अद्भुतानि यन्त्राणि च प्रादुरभाव्यन्त मतिमद्भिः । अस्मिन्नेव शतके परतन्त्राणि राष्ट्राणि स्वाधीनतामापुः, स्वाधीनानि च कतिचिद् राष्ट्राणि पारतन्त्र्यनिगडैर्न्यबध्यन्त। एवं नानानववृत्तभूषिते खल्वस्मिन्नेव शतके सुगृहीतनामधेयो-दयानन्दर्षिश्चिरविलुप्तान् वेदानुददीधरत्, पुराणमलकलुषितं च वैदिकं धर्मं पवित्रयित्वा पुनर्भारते वर्षे प्राचीचरत्। इदमेव शतकं नष्टसकलश्रीकेऽपि, परैस्सावधानं निगडितेऽपि वृद्धे भारते वर्षे कांचिदभिनवां राष्ट्रियां जागृतिमपश्यत् । वैदिक-धर्मोद्गमेन, भारतीयया जागृत्या च सार्द्धमेव चिराय सुप्तं संस्कृतसाहित्यमपि पुनः स्फूर्तिमवाप। इदानीं पुनरपि भारतीयैः पुरातनसाहित्याऽध्ययनाय प्रयत्नः समाद्रियते। इदानीं पुनरपि जनैश्चिराय विस्मृतानि पुरातनपुस्तकान्युद्धर्तुं प्रयत्यते । इदानीं पुनरपि वैदेशिकीं भाषामपहाय श्रीमती गीर्वाणवाणी सादरं साग्रहं सश्रमं चाऽधीयते। चिरंतना ग्रन्थाः प्रकाश्यन्ते, साहित्यवृद्धये नूतना ग्रन्था विरच्यन्ते, संस्कृतवचसां प्रसाराय पत्रादिप्रचारात्मका विविधा उपाया अवलम्ब्यन्ते, तदु-

न्नतये गुरुकुलानि च स्थाप्यन्ते । किं बहुना, इदानीं भारतीयेषु बहवः संस्कृतसाहित्यस्य पुनरुद्धृतये मनसा वचसा कर्मणा च प्रयतन्ते, आशासन्ते च यत्पुनरपि संस्कृतसाहित्यं विक्रमादित्यकालीनां श्रियमवाप्स्यतीति ।

अहं तु मन्ये यद्, गतं यौवनं न गीर्वाणवाण्या पुनरुपलब्धुं शक्यते । अद्यत्वे दृश्यमाना दशा नैतद्दर्शयति यत्, पुनरपि नवीनैर्ग्रन्थैः, नवीनैः काव्यैः, नवीनैर्वा शास्त्रैस्सुरगिरां साहित्यं काञ्चिदुपचितिं यास्यति । विक्रमकालीनायाः संस्कृतसाहित्यस्य जागृतेरद्यतनी जागृतिर्बलवत्खलु भिद्यते । तस्मिन् काले प्रसृतायां, साधारणजनैः भाष्यमाणायां चापि प्राकृतभाषायां, विद्वांसः संस्कृतवाण्यामेव ग्रन्थान् व्यरचयन्, तामेव च भाषां पूज्यत्वेनामन्यन्त । अद्यत्वे तु प्राकृतशब्देन व्यवह्रियमाणासु भाषास्वपि समुन्नतं साहित्यमुपलभ्यते, तासु भाषासु विद्वांसोऽपि ग्रन्थान् विरचयन्ति, तामेव च व्यवहारकाले प्रयुञ्जते । अतएव सादरमधीयाना अपि संस्कृतसाहित्यं, न बहवो विद्वांसोऽनया ग्रन्थान् निर्मातुं प्रयतन्ते । किञ्च, विक्रमकाले कृत्रिमतामापन्नापीयं भाषा व्यवह्रियतेस्मैव लोके विद्वद्भिः । अद्यत्वे तु सर्वथैव कृत्रिमतां व्यवहार्याऽभावत्वं चापन्नेयं वाणी समुन्नतिशीला भाषा न परिस्पर्धितुमर्हति । अतोऽस्यां भाषायां निबद्धा अपि प्रबन्धा न तादृशं सारस्यं वहन्ति । तस्माद् भारतीयैः पुनरुज्जीव्यमानमपीदं संस्कृतसाहित्यं काञ्चिदभिनवां समुन्नतिं लप्स्यते इति न सम्भावनामधिरोहति ।

संस्कृतभाषा भारतव्यापिनी भवितुमर्हति नवेत्यपि विषयोऽत्र संक्षेपतः स्प्रष्टव्योऽस्ति । "सर्वत्र भारते प्रसरत्वियं भाषे" ति बलवत्यां हृदभिलाषायां सत्यामपि युक्तिसाहाय्येन परीक्ष्यमाणेऽस्मिन् विषये, आशाभङ्ग एव संजायते । माधुर्य–स्थैर्य-शब्दप्राचुर्यादिभिर्विविधैर्गुणैर्मण्डिताया अप्यस्याः संस्कृतवाण्याः सर्वत्र भारते प्रसारः संदिग्ध एव नः प्रतिभाति । हेतवोऽप्यत्र विस्पष्टा एव । पूर्वं तावत् संस्कृतगिरमपेक्ष्य बहुतरैर्जनैर्भाष्यमाणा, बहुतमैश्च अवबुध्यमाना हिन्दीभाषा आर्यभाषा वैतस्याः प्रतिद्वन्द्वितां भजते । संस्कृतभाषा, नागरीमपेक्ष्य श्रमसाध्येति सर्व एव जानन्ति । तत्, स्थितायां हिन्दीभाषायां, संस्कृतभाषा देशव्यवहार्या भविष्यतीति न सम्भाव्यते । किञ्च, विक्रमकाले बौद्धधर्मं विध्वस्य ब्राह्मणधर्मः पुराणधर्मो वा प्रवृत्त इति तात्कालिकी धार्मिकी क्रान्तिरभवत् । बौद्धैः प्राकृतभाषा, ब्राह्मणैस्तु संस्कृतभाषा समाद्रियते स्म । ततः परिभूतेषु बौद्धेषु, सत्कृतिमाप्नुवत्सु च ब्राह्मणेषु अपाचैषीद् बौद्धानां प्राकृतभाषा, उपाचैषीत्तु विद्वद्भिराद्रियमाणा धर्मादिकृत्येषु च प्रयुज्यमाना गीर्वाणवाणी । परन्तु, नाद्यत्वे तादृशी दशा दृश्यते । नाद्यत्वे ब्राह्मणानां तादृशः प्रभावोऽवलोक्यते येन तस्याः प्रसारः सुलभः स्यात्, प्रत्युत वैदिकधर्ममुदिधीर्षुणा दयानन्दर्षिणाऽपि धर्मप्रचाराय हिन्दीभाषा समाश्रिताऽभूत् । पुरा बौद्धद्वेषादपि तेषां भाषाऽवज्ञायतेस्म । नेदानीं संस्कृतोन्नतिमभिलाषुकैर्लोकव्यवहार्या भाषा अवहेल्यन्ते । प्रत्युत, तैरेव सोत्साहं तासां भाषाणां समृद्धयै

प्रयत्यते । तस्माद्देशव्यापित्वेन संस्कृतभाषाया भारते वर्षे प्रसारः संदिग्ध एव नः प्रतिभाति ।

परन्तु देशव्यापित्वेनाऽस्या भाषायाः प्रसारे संदेहास्पदेऽपि, नैषास्माभिः परिहातुं शक्यते । अद्यापि विद्वत्समाज इयमेव भाषा भाष्यते, तेन विदुषां संगतौ सर्वथाऽपि समर्थैवेयं भाषा; लोकव्यवहृत्यै अनुपयुक्तापि विद्याविषयकेषु वादेष्वियं वागुपयुज्यत एव; तस्माद् यथाशक्यमस्याः प्रसाराय, अस्माभिः प्रयतितव्यमेव ।

देशव्यापिनीयं भाषा भवतु, मा वा भवतु, भारतोन्नत्यै भारतीयानां संस्कृतसाहित्यानुशीलनमावश्यकमेव । यावदस्माभिर्वैदेशिकं साहित्यमपहाय पुरातनं वैदिकं नवीनं च साहित्यं नालोच्यते, तावद् धर्मोन्नती राष्ट्रोन्नतिश्च गगनकुसुमायितैव । अस्माकं नवीनेऽपि संस्कृतसाहित्ये तानि विचाररत्नानि दृश्यन्ते, यानि वृथैवाऽस्माभिरन्यत्रान्विष्यन्ते । तस्मात् संस्कृतसाहित्योन्नतये यावानपि यत्नः क्रियेत, स सर्वोऽपि प्रशंसामनुमोदनञ्चार्हति । अस्मद्देशवासिनः संस्कृतसाहित्यालोचने तावन्तमपि श्रमं नांगीकुर्वन्ति यावद्वैदेशिकाः विद्वांस इति समवलोक्य विषीदत्येव नश्चेतः । अस्मदीयमेतत्साहित्यमिति वा, अस्मत्पूर्वजैरस्माकमुपकृत्यै समुपनिबद्धमिति वा, राष्ट्रोन्नतेर्मूलकारणमिति वा, जगदभ्युदयाय तदनुशीलनमावश्यकमिति वा, तद्विना भारते धर्मस्थितिरसम्भवनीयेति वा, सर्वथापि सर्वैर्यत्नैर्भारतीयैर्विद्वद्भिः संरक्षणीयमेवैतत् साहित्यम् । अन्ते चेदमेव निवेद्यते यत्—

विजहतु भुवि भद्रा दीर्घनिद्रामिदानीं
पुनरपि सुरवाणी साहिती मानमेतु ।
पुनरपि च पराधिव्याधिबाधाऽभिभूतं
त्रिभुवनमणिभूतं जायतां भारतं नः ॥

———

## गुरुकुल ग्रन्थावलिः ।

१ अष्टाध्यायी, तत्त्वप्रकाशिकया सहिता ( पूर्वार्द्धम् ) २)
२ अष्टाध्यायी, तत्त्वप्रकाशिकया सहिता ( उत्तरार्द्धम् ) १।)
३ नामिकः.................................................. =)॥
४ सन्धिविषयः.................................................. =)
५ अष्टाध्यायी ( मूलमात्रा )........................................ ।)॥
६ संस्कृत-प्रथम पुस्तकम्........................................ -)
७ संस्कृताङ्कुरः.................................................. =)
८ आर्य्यसूक्तिसुधा.................................................. ।)
९ काव्यलतिका ( अत्र किरातार्जुनीयात् माघाच्च छात्रोपयोगिनः श्लोकाः संगृहीताः, मल्लिनाथ टीका सहिताः ।।।)
१० आख्यातिकः.................................................. ।।।)
११ धातुपाठः.................................................. ।)

Ideal of Education: Ancient and Modern by Rama Deva B. A .............................. =)

उपर्युक्त पुस्तकें इस पते से मिलेंगीः—

मुख्याधिष्ठाता

गुरुकुल ( काङ्गड़ी ) हरिद्वार

* ओ३म् *

# साहित्यपरिषत्

**सरस्वती श्रुतिमहती महीयताम् ।**

इह गुरुकुले विद्वद्भिश्छात्रैश्च सम्भूय साहित्यपरिषद्-भिधा परिषदेका स्थापिताऽस्ति । प्रतिपक्षमस्या अधिवेशनं जायते । तत्र च प्रतिवारमेको निबन्धः, आर्यभाषया गीर्वाण-वाण्या च निबद्धः श्राव्यते । यमधिकृत्य च विवादोऽपि प्रवर्तते । अस्याः सभासच्चलीप्सुभिः प्रतिवर्षं रूप्यकद्वयं प्रदातव्यं भवति ।

इन्द्रः
मन्त्री साहित्यपरिषदः

---

पं० अनन्तराम शर्म्मा के प्रबन्ध से सद्धर्म्मप्रचारक यन्त्रालय
गुरुकुल कांगड़ी में मुद्रित ।

